पुनरन्यथोदाहरति—

क्वचिद्वाच्ये प्रतिषेधरूपेऽनुभयरूपो यथा ।

नायकः स्वापराधमवधाय सङ्केतस्थलान्निवर्तमानां दयितां निवर्तयंश्चाधुनाऽनुनयति—

'दे आ पसिअ णिवत्तसु मुहससिजोह्लाविलुत्ततमणिवहे ! ।
अहिसारिआणँ विग्घं करोसि अण्णाणँ वि हआसे ! ॥'

"प्रार्थये तावत् प्रसीद निवर्तस्व मुखशशिज्योत्स्नाविलुप्ततमोनिवहे ! ।
अभिसारिकाणां विघ्नं करोष्यन्यासामपि हताशे ! ॥" इतिच्छाया ।

हे मुखशशिज्योत्स्नाविलुप्ततमोनिवहे ! वदनेन्दुचन्द्रिकानिरस्ततिमिरस्तोमे ! त्वामहं प्रार्थये, प्रसीद–प्रसन्ना भव, निवर्तस्व मा प्रयासीः । हे हताशे ! अन्यासामपि (स्वस्य त्वर्थतः प्राप्तम्) अभिसारिकाणां कान्तार्थं सङ्केतं गच्छन्तीनां, मार्गे मुखचन्द्रप्रकाशकरणाद् विघ्नं करोषीत्यर्थः । नायकस्य गृहमेवागच्छन्तीं प्रत्यप्रत्यभिज्ञानच्छलेन, तटस्थस्याभिसारिकासामान्यं प्रतिवेयमुक्तिरिति,' 'हताशे' इति सम्बुद्ध्यनौचितीं चाहुराचार्याः ।(अत्र प्रवृत्तिप्रतिषेधरूपं निवर्तनं वाच्यम्, विधिनिषेधाभ्यामुदासीनं दयितोपश्लोकनन्तु व्यङ्ग्यमिति भेदः सुवेदः)॥

पुनः प्रतिपाद्यभेदनिवन्धनं तयोर्भेदमुदाहरति—

क्वचिद्वाच्याद्विभिन्नविषयत्वेन व्यवस्थापितो यथा ।

वाच्ये यो विषयः प्रतिपाद्यो बोद्धव्य इति यावत्, तस्माद् विभिन्नो विषयो बोद्धव्यजनो यस्य तत्त्वेन व्यवस्थापितो वक्त्र्या नियमितः ।

अविनीतनायिकाया अधरे क्षतदर्शनेन नायकस्य तद्विषयकजारकर्तृकत्वसन्देहो मा भूदिति वाच्यकक्षायां ताम्प्रति, व्यङ्ग्यकक्षायान्तु तत्पतिं प्रति विदग्धसहचरी निगदति—

'कस्स व ण होइ रोसो दट्ठूण पिआए सव्वणं अहरम् ।
सभमरपउमग्घाइणि ! वारिअवामे ! अहसु एह्लिम्' ॥

"कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम् ।
सभ्रमरपद्माघ्रायिणि ! वारितवामे ! सहस्वेदानीम् ॥" इतिच्छाया ।

प्रियायाः स्वपत्न्याः सव्रणमनात्मकृतक्षतभाजम्, अधरं दृष्ट्वा, कस्य वा पुंसो रोषो न भ ति, (अपि तु सर्वस्य भवत्येव) भ्रमरेण सहितं सभ्रमरं यत्पद्मं तदाघ्रातुं

शीलमस्या इति तत्सम्बुद्धौ हे सभ्रमरपद्माघ्रायिणि ! तथा वारिता 'मा सभ्रमरं पद्मं घ्रासीः' इति मुहुर्निरुद्धाऽपि वामा विरुद्धाचरणात् प्रतिकूला या, तत्सम्बुद्धौ हे वारितवामे ! इदानीं पतिसंशयदशायां स्वानुचिताचरणोचितफलोपगमावसरे वा, सहस्व स्वदुरभिनिवेशसम्भवं पतिरोपजनियन्त्रणं मर्षयेत्यर्थः ।(इह मद्वारणमनादृत्य विहितस्याग्रहस्य फलं भुङ्क्ष्व, न मयाऽत्र किमपि प्रतिविधेय' मितितात्पर्यकस्य वाच्यस्य प्रतिपाद्या नायिका, मया वारिताऽपीयं मत्सखी, वामस्वभावतया सभ्रमरं पद्ममघ्रासीदिति भ्रमरेणास्या अधरो दष्टो, न तूपपतिनेतिव्यङ्ग्यस्य प्रतिपाद्यस्तु सन्निहितस्तत्पतिरिति विषयभेदादपि तयोर्भेदः स्ववधार्यः) (अत्र सम्भविनामन्येषां क्रमशो भासमानानां प्रतिवेशि–सपत्नी– नायिका– तदुपपति–तटस्थादिविषयकाणां व्यङ्ग्यानां विस्तरभिया वर्णनं पृथङ् न कृतमितिलोचनेनालोचनीयम् ॥
'गतोऽस्तमर्कः' इत्यादौ वाच्यव्यङ्ग्ययोर्भेदकानां संख्यादीनामपि सङ्ग्रहार्थमाह—

**अन्ये चैवं प्रकारा वाच्याद्विभेदिनः प्रतीयमानभेदा संभवन्ति । तेषां दिङ्मात्रमेतत्प्रदर्शितम् ।**

विभेदिनो भिन्नाः । प्रतीयमानभेदा व्यङ्ग्यप्रकाराः । दिङ्मात्रं नत्ववधारणम् । तेन सङ्ख्यादिभेदभिन्नानामपि सङ्ग्रहः । तदुक्तं दर्पणे—

"बोद्धृस्वरूपसङ्ख्यानिमित्तकार्यप्रतीतिकालानाम् ।
आश्रयविषयादीनां भेदाद्भिन्नोऽभिधेयतो व्यङ्ग्यः ॥" इति ॥

अलङ्कारात्मकव्यङ्ग्यद्वितीयभेदस्यापि वाच्याद्भेदमुपदिशति—

**द्वितीयोऽपि प्रभेदो वाच्याद्विभिन्नः सप्रपञ्चमग्रे दर्शयिष्यते ।**

द्वितीयोऽलङ्काररूपः । सप्रपञ्चम्–सविस्तरम् । अग्रे 'क्रमेणोद्द्योतितः परः' इत्यादिना द्वितीयोद्द्योते । वस्तुध्वनिवदलङ्कारध्वनिर्विधिनिषेध–तदुदासीनरूपत्वेनैव नानुगतः, किन्तु बहुशाख इतीह विस्तरेण न वर्णित इतिभावः ।

रसादिलक्षणं प्रधानतमं व्यङ्ग्यस्य तृतीयमपि भेदं वाच्याद्भिन्नं वदति—

**तृतीयस्तु रसादिलक्षणः प्रभेदो वाच्यसामर्थ्याक्षिप्तः प्रकाशते । न तु साक्षाच्छब्दव्यापारविषय इति वाच्याद्विभिन्न एव ।**

तृतीयो रस–भाव–तदाभास–तदुदय–शान्ति–सन्धि–शवलताध्वनिरूपो व्यङ्ग्यप्रकारः, वाच्यसामर्थ्याक्षिप्तोऽर्थनिष्ठव्यञ्जनाऽवगतः, प्रकाशते बोधविषयो भवति,

न तु साक्षाच्छब्दव्यापारस्याभिधाशक्तेः, विषयस्तत्प्रयोज्यशाब्दधीगोचरो भवति। तथा सति दोषान्तरैः सह स्वशब्दवाच्यत्वमप्यापद्येत।

रसादीनां वाच्यत्वं खण्डयितुं विकल्पयति—

**तथा हि वाच्यत्वं तस्य स्वशब्दनिवेदितत्वेन वा स्यात्, विभावादिप्रतिपादनमुखेन वा।**

तस्य रसादेः, स्वशब्दैरसादिशब्दैश्शृङ्गारादिशब्दैर्वा, निवेदितत्वेनाभिधाद्वारा बोधनेन, विभावादिवाचकशब्दैरभिधाद्वारा विभावादेः, 'यत्परः शब्दः स शब्दार्थः' इति न्यायेन तात्पर्यशक्त्या च रसादेरपि बोधनेन वाच्यत्वं सम्भवति।

तत्राद्यपक्षे दोषमाह—

**पूर्वस्मिन्पक्षे स्वशब्दनिवेदितत्वाभावे रसादीनामप्रतीतिप्रसङ्गः।**

रसादि—शृङ्गारादिशब्दैरेव रसादीनामास्वाद इति पूर्वः पक्षः, तदभ्युपगमे तु, रसादिशब्दाभाववति—

भानुमिश्रस्य—

"कर्णकल्पितरसालमञ्जरी—पिञ्जरीकृतकपोलमण्डलः।
निष्पतन्नयनवारिधारया, राधया मधुरिपुर्निरीक्ष्यते॥"

इत्यादौ रसप्रतीतिः,।

रूपगोस्वामिनः:— मुकुन्द। २॥

"अवतंसितमञ्जुमञ्जरे, तरुणीनेत्रचकोरपञ्जरे।
नवकुङ्कुमपुञ्जपिञ्जरे, मतिरास्तां मम गोपकुञ्जरे॥"

इत्यादौ भावप्रतीतिश्च सर्वसम्मताऽपि भवितुं न शक्नुयात्। रसालशब्दस्य व्यूढस्यैव चूते रूढिरिति तद्घटकरसशब्दो निरर्थकः। तामेवानुपपत्तिमुपपादयति—

**न च सर्वत्र तेषां स्वशब्दनिवेदितत्वम्।**

सर्वत्र रसादिप्रत्यायके काव्ये तेषां रसादीनां च न तत्त्वम्। इत्थञ्च रसादिवाचकाभावेऽपि तत्र तत्र रसप्रतीतेर्जागरूकत्वाद्व्यक्तो व्यतिरेकाभावः।

अथान्वयाभावमपि दर्शयति—

**यत्राप्यस्ति तत् तत्रापि विशिष्टविभावादिप्रतिपादनमुखेनैवैषां प्रतीतिः।**

यत्रापि—

"मीनवती नयनाभ्यां चरणाभ्यामपि प्रफुल्लकमलवती।
शैवालिनी च केशैः सुरसेयं सुन्दरी सरसी॥" इत्यादौ,

"त्रिभुवनकमनं तमालवर्णं, रविकरगौरवराम्बरं दधाने ।
वपुरलककुलाग्रतानानाब्जं, विजयसखे रतिरस्तु मेऽनवद्या ॥"

इत्यादौ च रसस्य भावस्य च तत् स्वशब्दनिवेदितत्वमस्ति, तत्रापि रसभावास्वादौ रसभाववाचकशब्दमहिम्ना नैव भवतः, किन्तु विशिष्टानां मिथस्संसर्गेण विलक्षणानां विभावादीनां, प्रतिपादनमुखेनैव, एषां रसादीनां प्रतीतिरास्वादो भवतीत्यर्थः ।

ननु तत्र रसादिशब्दादपि तत्प्रतीतिर्वारयितुमशक्येत्यत आह—

**स्वशब्देन सा केवलमनूद्यते, न तु तत्कृता ।**

सा रसादिप्रतीतिः । न तत्कृता न रसादिशब्दप्रयोज्या ।

अयम्भावः—रसादिव्यञ्जकाभ्यां रसादिशब्दघटिताभ्यामुक्तवाक्याभ्यां यो रसाद्यास्वादः, स च विभावादिप्रतीतिद्वारको व्यक्तिप्रयुक्त एव, न तु रसरतिशब्दप्रयुक्तः । तत्र रसरतिशब्दौ च शाब्दबोधमात्रं जनयन्तौ तमेवास्वादमनुवदतः, न तु स्वयं तमास्वादं जनयितुमीशाते, व्यभिचारेण तत्कारणताविघटनात् ।

तत्र व्यतिरेकिहेतुमाह—

**विषयान्तरे तथा तस्या अदर्शनात् ।**

विषयान्तरे विभावादिवाचकशब्दभाववति रसादिशब्दघटितेऽपि—

"सरसो विपरीतश्चेत् सरसत्वं न मुञ्चति ।
साक्षराविपरीताश्चेद् राक्षसा एव केवलम् ॥" इत्यादौ,

तथा।तादृशालौकिकचमत्कारप्राणत्वप्रकारेण, तस्या रसादिप्रतीतेः, अदर्शनादनुव्यवसायविरहादित्यर्थः । यदि रसादिशब्देभ्य एव रसाद्यास्वादो, न तु विभावादिवाचकशब्देभ्यः, तदा विभावादिप्रतिपादकशब्दाभावेऽपि पूर्वोक्तपद्ये स स्यात् ।

विच्छित्तिविधुरं शाब्दधीमात्रं तु तत्रापि भवत्येवेत्याचष्टे—तथेति ।

तथेति । प्रत्यक्षातिरिक्तं ज्ञानं न चमत्कारकारीति प्रदीपे स्फुटम् ।

तदाह—

**नहि केवलशृङ्गारादिशब्दमात्रभाजि विभावादिप्रतिपादनरहिते काव्ये मनागपि रसवत्त्वप्रतीतिरस्ति ।**

आदिशब्देन वीरकरुणाद्भुतहास्यभयानकवीभत्सरौद्रशान्ता गृह्यन्ते । मनागीषत् । रसवत्त्वस्य रसस्य प्रतीतिरास्वादः, प्रकृत्यर्थे प्रकारीभूतस्य भावत्वात् ।

पर्यवसितमाह—

**यतश्च स्वाभिधानमन्तरेण केवलेभ्योऽपि विभावादिभ्यो विशिष्टेभ्यो रसादीनां प्रतीतिः । केवलाच्च स्वाभिधानादप्रतीतिः । तस्मादन्वयव्यतिरेकाभ्यामभिधेयसामर्थ्याक्षिप्तत्वमेव रसादीनाम् । नत्वभिधेयत्वं कथञ्चित् । इति तृतीयोऽपि प्रभेदो वाच्याद्भिन्न एवेति स्थितम् ।**

अभिधीयते ऽभिधया बोध्यतेऽनेनेत्यभिधानं वाचकशब्दः, तद्विनाऽपि, यस्माद्विभावादिप्रतीतिवलेन रसाद्यास्वादो भवति, तत्सत्त्वेऽपि विभावादिप्रतिपादनं विना च न भवति । तस्मात् कार्य्यसत्त्वे कारणसत्त्वं, कारणाभावे कार्य्याभावः इत्यन्वयव्यतिरेकयोः कारणता–नियामकयोरभावाद्रसादिशब्दानां नैव रसाद्यास्वादजनकत्वम् । इत्थं पूर्वो विकल्पः स्फुटं निरस्तः । द्वितीयस्तु विकल्पः सर्वथा खण्डनं नैवार्हति, विभावादिप्रतीतिद्वारकस्य रसास्वादस्य स्वीकृतत्वात्, किन्तु तत्र तेषां वाच्यत्वमात्रं खण्डनीयम्, विभावादिवाचकशब्देभ्योऽभिधया तदवोधात् । अत एव कण्ठतस्तदापत्तिर्नोक्ता । एवञ्च रसादिरूपव्यङ्ग्यतृतीयभेदस्यापि नैव वाच्यता, किन्तु वाच्यसामर्थ्याक्षिप्तत्वमेव । इति तस्मात् । सर्वे त्रयोऽपि, प्रतीयमानप्रकारा वाच्यातिरिक्ता एवेति स्थितं पर्यवसितमित्यर्थः ।

रसादिप्रतीतेरलक्ष्यक्रमत्वं समासेनाह—

**वाच्येन त्वस्य सहेव प्रतीतिरित्यग्रे दर्शयिष्यते ।**

अस्य रसादिरूपव्यङ्ग्यस्य, न तु वस्त्वलङ्काररूपयोः, प्रतीतिर्वाच्येन सह सममिव, न तु सहैव; नवाचिरकालोत्तरम्, भवतीत्यग्रे द्वितीयोद्द्योते–'रसभावतदाभासभावशान्त्यादिरक्रमः' इति कारिकया तृतीयोद्द्योते–प्रघट्टकेन च दर्शयिष्यत इत्यर्थः । कार्यकारणभावाद्वाच्यप्रतीतेः पश्चाद्भवन्त्या अपि रसादिप्रतीतेर्लाघवातिरेकेण क्रमः सम्यङ् न लक्ष्यत इत्यसंलक्ष्यक्रमत्वं रसादीनामिवशब्दो व्यनक्ति ॥

रसादिरूपव्यङ्ग्य एव काव्ये जीवनाधायक इति प्राचीनेतिवृत्तोपन्यासेन द्रढयति–

**'काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा ।**
**क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः ॥ ५ ॥'**

स व्यङ्ग्यो रसादिरेवार्थः काव्यस्य जीव इव शरीरस्य जीवनाधायकत्वादात्मा प्रधानमस्तीति शेषः । तथाच आदिकवेर्वाल्मीकेः क्रौञ्चद्वन्द्वस्य बकोटमिथुनस्य

वियोगादेकस्य व्याधेन हननाज्जायमानाद्विरहाद् उत्थः—उत्पन्नः, शोकः करुणरसस्थायिभावः, श्लोकत्वं छन्दोबन्धविशिष्टपद्यत्वम् ,आगत प्राप्त इत्यर्थः ।

इह त्रिविधानामपि व्यङ्ग्यानां प्रक्रमेऽपि, सन्निकर्षविशेषवशाद् वृत्तिग्रन्थवलाच्च तच्छब्देन रसादिरेव गृह्यते । तदेव विशदीकरोति—

**विविधवाच्यवाचकरचनाप्रपञ्चचारुणः काव्यस्य स एवार्थः सारभूतः। तथाचादिकवेर्वाल्मीकेर्निहतसहचरविरहकातरक्रौञ्च्याक्रन्दजनितः शोक एव श्लोकतया परिणतः ।**

विविधेन नानासंविधानेन, वाच्यवाचकयोरर्थशब्दयोः, रचनायाः प्रपञ्चेन विन्यासेन, चारुणो मनोरमस्य, काव्यस्य, स रसादिरेवार्थः सारभूतः प्रधानम् । तथाच—आदिकवेर्वाल्मीकेः, निहतस्य व्याधेन मारितस्य सहचरस्य विरहेण कान्तस्य वियोगेन, कातरायाः—विह्वलायाः क्रौञ्च्या आक्रन्दाज्जनितश्श्रवणागोचरीभूतः, शोकश्चित्तवृत्तिविशेष एव श्लोकतया पद्यरूपेण परिणतः पर्यवसन्न इत्यर्थः । 'सन्निहितसहचरीविरहकातरक्रौञ्चाक्रन्दजनितः' इतिपाठः , 'क्रौञ्चद्वन्द्ववियोगेन सहचरीहननोद्भूतेन साहचर्यध्वंसनेन' इत्यादिव्याख्यानञ्च न सम्यक्—

'तस्मात्तु मिथुनादेकं पुमांसं पापनिश्चयः ।
जघान वैरनिलयो निषादस्तस्य पश्यतः ॥'

इति तदीयरामायणेन निषादकृतक्रौञ्चघातस्यैव सिद्धेः, तत्समशिरस्कतया मतिमारूढे श्रीरामचरितात्मकद्वितीयार्थेऽपि रावणवधस्यैव प्रसिद्धेश्च । अत एव 'कश्चन क्रौञ्चमिथुनादेकं पञ्चशरविद्धमपि व्याधेनानुविद्धम्' इति भोजमहाराजः प्रायुङ्क्त । एतेन 'अनुप्रेषितश्च स तया निषादनिहतसहचरीकं क्रौञ्चयुवानं करुणक्रेङ्कारया गिरा क्रन्दन्तमुदीक्ष्य शोकवान् श्लोकमुज्जगाद' इति राजशेखरोक्तिरप्यपहस्तितैव ।

ननु चित्तवृत्त्यात्मकशोकस्य शब्दार्थरूपश्लोकत्वपरिणामो न सम्भवतीति चेत् ? सत्यम् । न हि परिणामोऽत्र साङ्ख्याभिमतं कारणसमसत्ताकं कार्यं मन्यते, किन्तु 'वृक्षः फलरूपेण परिणतः' इत्यादिवत् फलं कार्यमात्रम् । तथाच शोकास्वादानन्तरं मुनिहृदये सहसैव श्लोकस्याविर्भावेन 'तदुदितः स हि यो यदनन्तरः' इतिन्यायेन शोकस्य श्लोकः परिणामः सङ्गच्छते । एषा विचित्रपरिणतिरेव स्वशिष्यं भारद्वाजं प्रति 'अहो किमिदम्' इतिप्रश्नहेतोर्मुनिचित्रीयितत्वस्य मूलम् । 'न मुनेः शोक इति

मन्तव्यम्' इत्यादिलोचनन्तु चिन्त्यम्, क्रौञ्चस्य शोकालम्बनविभावतायास्तत्रैवोक्तत्वेन तस्य क्रौञ्चवृत्तित्वेन वक्तुमशक्यत्वात्। 'चर्वणा च सामाजिकानामिति तेष्वेव रसः' इत्यादिना प्रदीप आस्वादात्मनो रसादेरालम्बनेऽस्वीकारादनायत्या मुनौ तत्कल्पनात्। न च मुनेः शोकाङ्गीकारे दुःखितया तद्वृत्तिशोकस्य दुःखसंवलनात्काव्यात्मत्वं न स्यादिति वाच्यम्? मुनेर्दुःखित्वेऽप्यानन्दचिन्मयस्य रसादेरात्मत्वेऽबाधात्। लौकिकस्य शोकस्योद्वेजकत्वेऽप्यलौकिकभावताऽऽपत्तिदशायामानन्दरूपत्वं हि सर्वसम्मतम्। रस्यमानतास्थितावेव हि शोकस्य रसादिपदवाच्यत्वम्।

एवं तेन यदाह भट्टनायकः—

'शब्दप्राधान्यमाश्रित्य तत्र शास्त्रं पृथग्विदुः।
अर्थतत्त्वेन युक्तं तु वदन्त्याख्यानमेतयोः।
द्वयोर्गुणत्वे व्यापारप्राधान्ये काव्यधीर्भवेत्॥' इति;

तदपास्तम्। व्यापारो हि यदि ध्वननात्मा रसनास्वभावः, तन्नापूर्वमुक्तम्। अथाभिधैव व्यापारः, तथाप्यस्याः प्राधान्यं नेत्यावेदितं प्राक्' इतिभट्टनायकोक्तिखण्डनमपि चिन्त्यमेव, रसनाख्यव्यापारस्य सर्वानभ्युपगमादज्ञातुश्च कृतेऽपूर्वत्वादित्यलं प्राचीनवचनपर्य्यालोचनयेति दिक्॥

आदिकवेः श्लोकं निर्दिशति—

'मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्॥' इति

हे निषाद! तु निश्चयेन मा नास्ति यस्य सोऽमो निश्श्रीकस्तत्सम्बोधने हे अम! (त्वम्) शाश्वतीरपरिमिताः, समा वर्षाणि यावत् प्रतिष्ठां स्थितिं मा गमो न प्राप्नुहि, द्रुतं म्रियस्वेति यावत्। यद् यस्मात् कामेन मोहितं मदनातुरम्, क्रौञ्चमिथुनाद्बकविशेषद्वन्द्वादेकं पुमांसम्, अवधीर्निहतवानिति शोकपक्षीयोऽर्थः।

अस्य श्लोकस्य रामायणाविर्भावमूलतया रामपक्षीयार्थस्तु—निषीदति तिष्ठत्यस्मिन्निति निषाद आश्रयः, माया लक्ष्म्या निषादो मानिषादस्तत्सम्बुद्धौ हे मानिषाद! श्रीनिवास! राम! त्वं शाश्वतीः समाः प्रतिष्ठाम् अगमः प्राप्तवानसि। यत् क्रुञ्चा कुटिलगतिकत्वाद्राक्षसी कैकसी तदपत्यं पुमान् क्रौञ्चो रावणस्तत्पत्नी च क्रौञ्ची मन्दोदरी, तयोर्मिथुनादेकं काममोहितं रावणमवधीरिति।

इह यच्छब्दस्योत्तरवाक्यघटकतया 'साधु चन्द्रमसि पुष्करैः कृतं, मीलितं यद-

भिरामताऽधिके' इत्यादिवन्नैव तच्छब्दोपादानोपेक्षा। पूर्वार्थे 'माङो योगेऽपि छान्दसत्वादड़ागमः' इति कस्यचन व्याख्यानन्तु 'अम' इति छेदेनैव निरवलम्बनीकृतम्॥

शोकस्यैतत्काव्यजीवितत्वबीजभूतं व्यङ्ग्यत्वमाह—

**शोको हि करुणरसस्थायिभावः प्रतीयमानरूप एवेति प्रतिपादितम्।**

करुणरसस्य—

'प्रकृष्यमाणो यो भावो रसतां प्रतिपद्यते।
स एव भावः स्थायीति भरतादिभिरुच्यते॥'

इत्युक्तलक्षणः स्थायी भावः, 'पुत्रादिमरणजन्मा वैक्लव्याख्यश्चित्तवृत्तिविशेषः शोकः' इतिजगन्नाथलक्षितः शोको व्यङ्ग्य एवात्र काव्ये जीवितम्, न तु वाच्य इत्युक्तमेवेत्यर्थः। वस्त्वलङ्कारध्वन्योः सतोरपि चमत्कारोत्कर्षनिबन्धनं रसादिध्वनेरेवात्मत्वम्। यत्र तु रसादिध्वन्यभावः, तत्र तयोरपि चमत्कारितया कुशकाशन्यायेन काव्यजीवितत्वम्। इहादिकविपद्येऽपि प्रथमार्थेन प्रधानतया प्रतीयमानः करुणस्थायी शोक एव जीवितम्॥ योऽर्थः सहृदयश्लाघ्यः काव्यात्मेति व्यवस्थितः' इत्यनेन सर्वेषामेव प्रतीयमानानामुपक्षिप्तं काव्यात्मत्वं रसादिमात्रस्य तत्त्वव्यवस्थापनेन विरुद्धमित्यत आह—

**प्रतीयमानस्य चान्यप्रभेददर्शनेऽपि रसाभावमुखेनैवोपलक्षणम्; प्राधान्यात्।**

यद्यपि व्यङ्ग्यस्य वस्त्वलङ्काररूपं भेदद्वयमपरमप्यस्ति, किन्तु विच्छित्तिविशेषाधानात् प्राधान्येन रसभावादीनां मुखेनैव द्वारेणैव, उपलक्षणं तयोरपि भासनमित्यर्थः। अभिप्रायस्तु प्रागेव स्फुटीकृतः॥

प्राचीनेतिवृत्तावलम्बेन व्यङ्ग्यस्य रसादेः काव्यात्मतां प्रतिपाद्य सम्प्रति तामेवान्यथाऽपि व्यवस्थापयति—

**'सरस्वती स्वादु तदर्थवस्तु निःष्यन्दमाना महतां कवीनाम्।
अलोकसामान्यमभिव्यनक्ति परिस्फुरन्तं प्रतिभाविशेषम्॥ ६॥'**

स्वादु चर्वणीयं, तदर्थवस्तु रसादिव्यङ्ग्यार्थरूपतत्त्वं, निःष्यन्दमाना—

'वाग्धेनुर्दुग्ध एकं हि रसं यद्बालतृष्णया।
तेन नास्य समः स स्याद्दुह्यते योगिभिर्हि यः॥'

इतिभट्टनायकोक्तेर्दुग्धं कामधेनुरिव स्वयं प्रस्नुवाना, महतां प्रतिभातिशयेन गुरूणां कवीनाम्, सरस्वती भारती अलोकसामान्यम्—अलौकिकमसर्वसाधारणं दिव्यमिति यावत्, परिस्फुरन्तमतिभासमानम्, प्रतिभाविशेषं (तदीय) सरसकाव्यरचनानिदान—नवनवोन्मेषशालिप्रज्ञाऽतिरेकम्, अभिव्यनक्ति सूचयतीत्यर्थः।

कविप्रतिभाया भासमानत्वेनानुभवविषयताऽप्यनुमन्यते न केवलमनुमितिगोचरतैव,

'नायकस्य कवेः श्रोतुः समानोऽनुभवस्ततः'

इति तौतभट्टोक्तेः ॥

कारिकां विवृणोति वृत्तिकृत्—

**भारती तद् वस्तुतत्त्वं निष्यन्दमाना महतां कवीनाम् अलोकसामान्यं प्रतिभाविशेषं परिस्फुरन्तमभिव्यनक्ति।**

व्याकृतोऽर्थः ॥

स प्रतिभाविशेष एव महाकवित्वस्य सम्पादक इति दर्शयति—

**येनास्मिन्नतिविचित्रकविपरम्परावाहिनि संसारे कालिदासप्रभृतयो द्वित्राः पञ्चषा वा महाकवय इति गण्यन्ते।**

येन परिस्फुरत्प्रतिभाविशेषेण हेतुना, अतिविचित्रकविपरंम्परावाहिनि नैकप्रकारकत्वेनाद्भुततरकविपरिपाटीधारणपटीयसि, अस्मिन् संसारे, कालिदासप्रभृतयस्तत्सदृशाः, द्वौ वा त्रयो वा द्वित्राः, पञ्च वा षड् वा पञ्चषा एव, न त्वन्येऽपि बहवः, महाकवय इति गण्यन्ते महाकवित्वेन सङ्ख्यायन्त इत्यर्थः।

तादृशप्रतिभाया एव महाकवित्वख्यातिमूलत्वादनेकेषु जातेषु जायमानेषु कविषु, विरलानामेव महाकवित्वेन गणनेत्यभिप्रायः ॥

सम्प्रति वाच्यव्यङ्ग्ययोः प्रतीतिसामग्रीभेदनिबन्धनमपि भेदं दर्शयितुमुपक्षिपति—

**इदं चापरं प्रतीयमानस्यार्थस्य सद्भावसाधनं प्रमाणम्।**

चकारः प्रागुक्तबोद्धृस्वरूपसङ्ख्यादीनि भेदकान्तराणि समुच्चितानि सूचयति। भेदसिद्धौ सुतरां सद्भावसिद्धिरिति पूर्वापरसन्दर्भसङ्गतिरनुसन्धेया ॥

तमेव भेदकमाह—

**'शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते।**
**वेद्यते स तु काव्यार्थतत्त्वज्ञैरेव केवलम् ॥ ७ ॥'**

स—व्यङ्ग्योऽर्थः, हि—यतः, शब्दार्थशासनमात्रेणैव केवलेन शब्दसाधकार्थव्युत्पादकव्याकरणकोशज्ञानेन, न वेद्यते नावगम्यते, किन्तु केवलं परं, काव्यार्थतत्त्वज्ञैः काव्यसारार्थभावकैः, वेद्यते, तस्माद्वाच्यतो ऽतिरिक्त एवेत्यर्थः ।

भावना वाच्यादिवैलक्षण्येन शश्वदनुसन्धानम् । वेद्यत इत्यविवक्षितप्रेरणार्थाद्वेत्तेर्णिजन्तात्कर्मणि तङ् । विद्यत इति पाठस्तूचितः । 'गतो ऽस्तमर्कः' इत्यादौ सूर्यकर्तृकास्तङ्गतिरूपवाच्यार्थस्यैव बोधे व्याकरणादिव्युत्पत्तिः कारणम्, सन्तापासद्भावादिनानाविधव्यङ्ग्यार्थावगमे तु काव्यार्थभावनापरिपक्वप्रज्ञैव कारणमिति प्रतीतिसामग्रीभेदहेतुकस्तयोर्भेद इति सारम् ॥

तदेवाह वृत्तिकारः—

**शब्दार्थशासनज्ञानमात्रेऽपि परं न वेद्यते सोऽर्थो यस्मात्केवलं काव्यार्थतत्त्वज्ञैरेव ज्ञायते ।**

व्याख्यातप्रायमेतत् ॥

तयोर्भेदकं तर्कमाख्याति—

**यदि च वाच्यरूप एवासावर्थः स्यात्, तद्वाच्यवाचकस्वरूपपरिज्ञानादेव तत्प्रतीतिः स्यात् ।**

वाच्यवाचकस्वरूपपरिज्ञानं पदप्रत्यक्षपूर्विका पदार्थोपस्थितिः ॥

तत्र सनिदर्शनं व्यतिरेकमाह—

**अथ च वाच्यवाचकलक्षणमात्रकृतश्रमाणां काव्यतत्त्वार्थभावनाविमुखानां स्वरश्रुत्यादिलक्षणमिव प्रगीतानां गान्धर्वलक्षणविदामगोचर एवासावर्थः ।**

यथा गान्धर्वलक्षणविदां सङ्गीतशास्त्रीयपदार्थसम्बन्धीनि लक्षणानि न तु लक्ष्याण्यपि जानतां पुंसाम्, प्रगीतानां प्रकृष्टगीतसम्बन्धी स्वरः—

"श्रुत्यनन्तरभावी यः स्निग्धो ऽनुरणनात्मकः ॥
स्वनो रञ्जयति श्रोतुश्चित्तं स स्वर उच्यते ॥"

इति सङ्गीतरत्नाकरोक्तलक्षणो निषादादिसप्तविधो ध्वनिविशेषः,

श्रुतिः—'प्रथमश्रवणाच्छब्दः श्रूयते ह्रस्वमात्रकः ।
सा श्रुतिः सम्परिज्ञेया स्वरावयवलक्षणा ॥'

इति तदुक्तलक्षणः स्वराद्यावयवात्मकः स्वनः, तल्लक्षणं तद्रूपं वस्तु, अगोचरो

बुद्धेरविषयः, लक्ष्याज्ञानात्, तथा वाच्यवाचकलक्षणमात्रे केवलशब्दार्थज्ञापकशास्त्रे कृतश्रमाणां काव्यार्थभावनाविमुखानामसहृदयवैयाकरणानाम्, असौ व्यङ्ग्योऽर्थः, बुद्ध्यविषय इत्यर्थः ।

यद्वा—यथा गान्धर्वलक्षणविदां स्वरश्रुत्यादिलक्षणं गोचरः, तथा नायं शब्दार्थमात्रविदां गोचर इति व्यतिरेकिदृष्टान्तो ऽयं द्रष्टव्यः । किन्त्वस्मिन् पक्षे नञः समासो दुर्घटः । 'अप्रगीतानाम्' इतित्वपपाठः, सन्दर्भाशुद्धेः ।

इदानीं प्रतीयमानार्थस्य प्राधान्यं बोधयितुमुपक्रमते—

**एवं वाच्यव्यतिरेकिणो व्यङ्ग्यस्य सद्भावं प्रतिपाद्य प्राधान्यं तस्यैवेति प्रतिपादयति—**

**'सोऽर्थस्तद्व्यक्तिसामर्थ्ययोगी शब्दश्च कश्चन ।**
**यत्नतः प्रत्यभिज्ञेयौ तौ शब्दार्थौ महाकवेः ॥ ८ ॥'**

स व्यङ्ग्योऽर्थः, च पुनः, कश्चनः न तु सर्वः, तस्य प्रविरलत्वात्, तस्य व्यङ्ग्यस्य व्यक्तिसामर्थ्येन व्यञ्जनशक्त्या योगः सम्बन्धोऽस्त्यस्येति तादृशः शब्दः,तौ शब्दार्थौ महाकवेः यत्नतः प्रत्यभिज्ञेयावित्यर्थः । महाकवेरिति कर्तरि षष्ठी । प्रत्यभिज्ञानमिह ज्ञातस्यापि शश्वदनुसन्धानरूपं निरूपणम्, न तु तदेवेदमिति प्रतीतिमात्रम् ॥

कारिकां विवृणोति वृत्तिकृत्—

**स व्यङ्ग्योऽर्थस्तत्प्रकाशनसामर्थ्ययोगी शब्दश्च कश्चन, न सर्वः । तावेव शब्दार्थौ महाकवेः प्रत्यभिज्ञेयौ व्यङ्ग्यव्यञ्जकाभ्यामेव हि सुप्रयुक्ताभ्यां महाकवित्वलाभो महाकवीनाम्, न वाच्यवाचकरचनामात्रेण ।**

व्यक्तिर्व्यञ्जनम् । नहि सर्व एव शब्दोऽर्थो वा व्यञ्जकः, किन्तु विरल एव । न वा व्यङ्ग्यव्यञ्जकप्रयोगमन्तरेण महाकवित्वसम्पत्तिः, तस्मान्महाकवित्वमाशासानस्य तादृशशब्दार्थभावनाविशेष एवावश्यक इत्याशयः ॥

ध्वनिमार्गे वाच्यवाचकयोर्बहिरङ्गत्वेऽपि प्रथमोपादानप्रयोजनमुपपादयति—

**इदानीं व्यङ्ग्यव्यञ्जकयोः प्राधान्येऽपि यद्वाच्यवाचकावेव प्रथममुपाददते कवयस्तदपि युक्तमेवेत्याह—**

**'आलोकार्थी यथा दीपशिखायां यत्नवाञ्जनः ।**
**तदुपायतया, तद्वदर्थे वाच्ये तदादृतः ॥ ९ ॥'**

आलोकार्थी प्रकाशं प्रकाशनं वाऽभिलषन्, जनो यथा तदुपायतया प्रकाशकारणत्वेन दीपस्य शिखायां कीलकलिकायां यत्नवान् भवति, तद्वत् तथा तदादृतो व्यङ्ग्यार्थप्रतीतिविषयकादरयुक्तो व्यङ्ग्यं बुभुत्सुरिति यावत्, तज्जनकतया वाच्येऽर्थे तदवगमे यत्नवान् भवतीत्यर्थः । कार्यस्य प्राधान्येऽपि कारणोपादानं प्रागेव युक्तम्, नच तावता तस्य प्राधान्ये काचन क्षतिरिति भावः ॥

तदाह वृत्तिकारः—

**यथा ह्यालोकार्थी सन्नपि दीपशिखायां यत्नवाञ्जनो भवति तदुपायतया । नहि दीपशिखामन्तरेणालोकः संभवति । तद्वद्व्यङ्ग्यमर्थं प्रत्यादृतो जनो वाच्येऽर्थे यत्नवान्भवति ।**

वाच्यव्यङ्ग्यप्रतीत्योः कार्यकारणभावस्त्वग्रेऽपि व्यवस्थापयिष्यते साम्प्रतन्तु प्रासङ्गिकः सनिदर्शनः समुद्देशः ॥

प्रकृतोपयोगं दर्शयति—

**अनेन प्रतिपादकस्य कवेर्व्यङ्ग्यमर्थं प्रति व्यापारो दर्शितः ।**

व्यङ्ग्यार्थबुबोधयिषयैव कविः शब्दं प्रयुङ्क्त इति तस्यैव परमोद्देश्यतया प्राधान्यमित्याशयः ॥

न केवलं वक्तुरेव सोऽर्थ उद्देश्यभूतः, किन्तु बोद्धुरपीत्याह—

**प्रतिपाद्यस्यापि तं दर्शयितुमाह ।**

तच्छब्दो व्यङ्ग्योद्देश्यकव्यापारं परामृशति ।

सदृष्टान्तप्रदर्शनं कार्यकारणभावमाह—

**'यथा पदार्थद्वारेण वाक्यार्थः सम्प्रतीयते ।**
**वाच्यार्थपूर्विका तद्वत्प्रतिपत् तस्य वस्तुनः ॥ १० ॥'**

पदार्थद्वारेण पदार्थप्रतीतिपुरस्सरं यथा वाक्यार्थः सम्प्रतीयते, तद्वत् तथा तस्य वस्तुनो व्यङ्ग्यार्थस्य प्रतिपज्ज्ञानम्, वाच्यार्थपूर्विका वाच्यार्थप्रतीतिपुरस्सरा, एवेत्यर्थः । प्रतिपदिति प्रतिपद्यतेर्ज्ञानार्थाद्भावे क्विप् । वाक्यार्थबोधे पदार्थोपस्थितिरिव, व्यङ्ग्यार्थबोधे वाच्यप्रतीतिः कारणमिति सारांशः ।

नन्वेवं वर्णानां व्यञ्जकत्वं व्याहन्येत वाच्यार्थविरहादिति चेत्? उच्यते—यत्र वाच्यव्यङ्ग्ययोरुभयोः प्रतीतिः, तत्रैव व्यङ्ग्यप्रतीतेर्वाच्यप्रतीतिपूर्वकत्वं कल्प्यते, इतरथा गुरुनये वाक्यार्थ एव शक्तिस्वीकारे दृष्टान्तासिद्धिरापद्येत। यत्र तु वाच्यबोधमनपेक्ष्यैव व्यङ्ग्यबोध आनुभविकः, तत्रानायत्या शब्दादिप्रत्यक्षपूर्वकत्वमेव तस्य स्वीक्रियते। इह दृष्टान्तदार्ष्टान्तिकयोः साम्यं त्वांशिकमेव सामान्यकारणत्वेनेतिविशेषतस्तृतीयोद्द्योते स्फुटीकृतं भविष्यति ॥

तदेवाह—

**यथा हि पदार्थद्वारेण वाक्यार्थावगमः, तथा वाच्यार्थप्रतीतिपूर्विका व्यङ्ग्यस्यार्थस्य प्रतिपत्तिः।**

एतावता वाच्यव्यङ्ग्यप्रतीत्योः क्रमोऽप्युद्दिष्टः।

ननु वाच्यस्य प्रथमप्रतीतत्वान्न कुतः प्राधान्यमित्यत आह—

**इदानीं वाच्यार्थप्रतीतिपूर्वकत्वेऽपि तत्प्रतीतेर्व्यङ्ग्यस्यार्थस्य प्राधान्यं यथा न व्यालुप्यते तथा दर्शयति–**

**'स्वसामर्थ्यवशेनैव वाक्यार्थं प्रतिपादयन्।**
**यथा व्यापारनिष्पत्तौ पदार्थो न विभाव्यते ॥११॥**

सन्दानितकम् ॥

तामेतां व्याचष्टे वृत्तिकारः—

**यथा स्वसामर्थ्यवशेनैव वाक्यार्थं प्रकाशयन्नपि पदार्थो व्यापारनिष्पत्तौ न विभाव्यते विभक्ततया।**

स्वस्योपस्थितपदार्थस्य, सामर्थ्यमाकाङ्क्षा–योग्यताऽऽसत्ति–तात्पर्य्यज्ञानादिसहकारिकारणसमवधानम्, तद्वशेन तदधीनतया यथा व्यापारस्य वाक्यार्थबोधानुकूलक्रियायाः, निष्पत्तौ पार्यन्तिकफलोत्पादनेन कृतकृत्यतायाम्, पदार्थो न विभाव्यते विभक्ततया नावगम्यते, तद्वदित्यग्रेसरकारिकया सह सम्बन्धः। एवं चेहाविज्ञायमानक्रमसत्त्वं सूचितम्। एतेन स्फोटात्मकतया क्रमाभावपरत्वमस्य केनचिदुक्तं प्रत्युक्तम् ॥

दृष्टान्तमुक्त्वा दार्ष्टान्तिकं ब्रवीति—

**'तद्वत्सचेतसां सोऽर्थो वाच्यार्थविमुखात्मनाम् ।**
**बुद्धौ तत्त्वार्थदर्शिन्यां झटित्येवावभासते ॥ १२ ॥'**

तद्वत्, वाच्यार्थाद् विमुखश्चमत्कारविरहादपरितुष्यन्, आत्मा येषां ते तथोक्ताः, तेषां सचेतसाम्, तत्त्वार्थदर्शिन्यां सारार्थानुसन्धायिन्याम्, बुद्धौ, स व्यङ्ग्योऽर्थः, झटित्येव वाच्यार्थप्रतीत्यविलम्बेनैव भासते विषयो भवतीत्यर्थः ।

इदमाकूतम्—तद्धर्मावच्छिन्नविषयताकशाब्दबोधत्वावच्छिन्नं प्रति, तात्पर्ययोग्यताऽऽकाङ्क्षाऽऽसत्तिप्रतीतिसध्रीचीनायास्तद्धर्मावच्छिन्ननिरूपितवृत्तिज्ञानाधीनतद्धर्मावच्छिन्नविषयताकोपस्थितेः कारणतया, यथा पदार्थोपस्थितिः, उपस्थितिविषयः पदार्थो वा, तात्पर्यादिज्ञानसहकारेण, वाक्यार्थबोधं जनयित्वा स्वयं सन्नपि पृथगनवगम्यमानः प्राधान्यं नावलम्बते, तथैव व्यङ्ग्यप्रतीतिजनकप्रतीतिविषयो वाच्योऽप्युपसर्जनत्वमेव भजति ॥

नन्वेवं सचेतसां बुद्धेरेवायमनुभावो यद्विलक्षणमर्थमवगाहते, न तु काव्यस्य कश्चन विशेषोऽमुना सिध्यतीत्याशङ्कां निराकर्तुमाह—

**यत्रावभासते ।**

यत्र काव्ये, वाच्यप्रतीतिसाहाय्येन, अवभासते, सोऽर्थ इति शेषः । तेन काव्यस्यापि महत्त्वमायातमेव । अविभागेन भासनाद्वाच्यस्य सर्वथैव तत्र नानवभासः । तेन घटप्रदीपन्यायमुपन्यस्य वाच्यव्यङ्ग्यप्रतीत्योरेककालिकत्वं बोधयता तृतीयोद्द्योतग्रन्थेन सह नास्य विरोधः ।

ननु ध्वनौ निरूपणीये व्यङ्ग्यस्य सत्त्व–वाच्यभिन्नत्व–प्रधानत्वानां विचारोऽनुचित इत्याक्षेपं समाधातुमाचष्टे—

**एवं वाच्यव्यतिरेकिणो व्यङ्ग्यस्यार्थस्य सद्भावं प्रतिपाद्य प्रकृत उपयोजयन्नाह ।**

एवमुक्तरीत्या वाच्यभिन्नस्य व्यङ्ग्यस्य सद्भावं सत्तामुत्तमतां प्राधान्यं वा प्रतिपाद्योक्त्वा, प्रकृते ध्वनिनिरूपणे, उपयोजयन्नुपकारं दर्शयन्नाहेत्यर्थः । सच्छब्दस्यार्थत्रयमिह विवक्षितमुपयोगात् ॥

ध्वनिं लक्षयति—

**'यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ ।**
**व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः॥१३॥'**

'यत्र काव्ये, उपसर्जनीकृतौ व्यङ्ग्योपस्कारकत्वेनाप्रधानीकृतौ स्वमात्मा अर्थश्च याभ्यां तौ गुणीकृतात्माऽर्थौ गुणीकृताभिधेयः शब्दश्च, तं सहृदयहृदयानन्दनेन प्रसिद्धं तदनुभवैकगोचरं 'प्रतीयमानं पुनरन्यदेव वस्तु' इत्यादिना पूर्वप्रक्रान्तं वा, अर्थं व्यङ्क्तो व्यञ्जनाशक्त्या प्रकाशयतः, स काव्यस्य विशेष उत्तमं काव्यं, ध्वनिरिति नाम्ना, सूरिभिर्ध्वनिपण्डितैः कथित इत्यर्थः । तथाच—'अप्रधानोपसर्जने' इत्यमरः । इह व्यङ्क्त इति द्विवचनं वाशब्दस्य समुच्चयद्योतकतां द्रढयति । नचैकतरस्य व्यञ्जकतायां काव्ये ऽव्याप्तिरिति वाच्यम्, एकस्य व्यञ्जकतायामपरस्य सहकारित्वस्वीकारात् । तदुक्तं साहित्यदर्पणे—

'शब्दबोध्यो व्यनक्त्यर्थः शब्दोऽप्यर्थान्तराश्रयः ।
एकस्य व्यञ्जकत्वे तदन्यस्य सहकारिता ॥'

इत्युभयोरपि व्यञ्जकत्वमायातमेव । तेनात्र द्विवचनासङ्गतिवचनं भट्टनायकस्य चिन्त्यमेव । काव्यशब्दो गुणालङ्कारप्रसाधितशब्दार्थयोः सर्वातिशायिव्यङ्ग्यप्रकाशकत्वे ध्वनित्वमनुमनुते । ध्वनतीति ध्वन्यते ऽनेन वेतिव्युत्पत्तिः शब्दार्थयोर्ध्वनित्वे ऽवधार्यते । शब्दस्य पश्चादुपादानमेवाप्राधान्यं सूचयति ।

यत्तु व्यक्तिं ध्वनिं शब्द शब्दनिवेशञ्च खण्डयता महिमभट्टेन—

'वाच्यस्तदनुमितो वा यत्रार्थोऽर्थान्तरं प्रकाशयति ।
सम्बन्धतः कुतश्चित् सा काव्यानुमितिरित्युक्ता ॥'

इतिकारिकास्वरूपं परिवर्त्य, 'एतच्चानुमानस्यैव लक्षणं नान्यस्य' इत्यभिहितम् । तदवसरे ध्वनिस्थापनेन तदनुमेयत्वकथनेन च स्फुटं निरस्येत । गीतादौ शब्दस्य व्यञ्जकताया व्यक्तमनुभवात्तन्निवेशोऽप्यावश्यक एव । तथाच—'स्वविषयकप्रतीतिजन्यचमत्कारन्यूनचमत्कारजनकप्रतीतिविषयत्व—स्वव्यञ्जकघटितत्वसम्बन्धाभ्याम् व्यङ्ग्यविशिष्टशब्दार्थोभयत्वम्' इति ध्वनिकाव्यस्य लक्षणनिष्कर्षः । विच्छित्तिविशेषाधायकशब्दार्थयोः काव्यत्वमितिनये लक्षणमिदम् । तादृशशब्दमात्रस्य तत्त्वाङ्गीकारमते तु शब्द एव व्यङ्ग्यवैशिष्ट्यं योजनीयमिति दिक् ॥

कारिकां विवृणोति—

**यत्रार्थो वाच्यविशेषो वाचकविशेषः शब्दो वा तमर्थं व्यङ्क्तः, स काव्यविशेषो ध्वनिरिति ।**

व्याख्यातम् ॥

एवं ध्वनिं लक्षयित्वा विप्रतिपन्नमतानि खण्डयितुमुपक्रममाणः प्रथमं ध्वनेरलङ्कारान्तर्भावाभावमाह—

**अनेन वाच्यवाचकचारुत्वहेतुभ्य उपमाऽऽदिभ्योऽनुप्रासादिभ्यश्च विभक्त एव ध्वनेर्विषय इति दर्शितम् ।**

अनेन शब्दार्थयोर्गौणत्वस्य व्यङ्ग्यस्य मुख्यतायाश्च वचनेन, उपमादयो वाच्यमात्रम्, अनुप्रासादयश्च वाचकमात्रमवलम्ब्य चारुतामादधानाः स्वरूपं प्रकाशयन्ति, ध्वनिस्तु शब्दार्थातिशायिनं व्यङ्ग्यमाश्रित्येति व्यक्तो विषयविभागः । आश्रयभेदे च तेषु तदन्तर्भावो दुर्भावः ।

अथाप्रसिद्धेर्ध्वनिमनङ्गीकुर्वतो मतमुद्दिश्य निराकरोति—

**यदप्युक्तम्—'प्रसिद्धप्रस्थानातिक्रमिणो मार्गस्य काव्यत्वहानेर्ध्वनिर्नास्ति' इति, तदप्ययुक्तम् । यतो लक्षणकृतामेव स केवलं न प्रसिद्धः, लक्ष्ये तु परीक्ष्यमाणे स एव सहृदयहृदयाह्लादकारि काव्यतत्त्वम् । ततोऽन्यच्चित्रमेवेत्यग्रे दर्शयिष्यामः ।**

पूर्वपक्षस्याशयः प्रागुक्त एव । लक्ष्यानुरोधेनैव लक्षणकरणमिति लक्ष्याप्रसिद्धिरिह ध्वनिसिद्धिं बाधितुं क्षमेत, न तु लक्षणाप्रसिद्धिः । लक्ष्यन्तु काव्यप्राणभूतं शतशः सहृदयानुभवगोचरीकृतं महाभारतादौ नैकधाप्रसिद्धमिति लक्षणकाराणामेवायं प्रमादः । 'न ह्ययं स्थाणोरपराधो यदन्धो नैनं पश्यती'तिन्यायेनेत्याशयः ।

ध्वनिपदमिह प्रधानाप्रधानान्यतरव्यङ्ग्यभृत्काव्यपरम् । अत एव 'ततोऽन्यच्चित्रमेव' इति वृत्तिस्सङ्गच्छते । लक्ष्यस्य परीक्षणं विवेकः । स एव काव्यतत्त्वमित्युद्देश्यविधेयवाचकपदयोः समानलिङ्गकत्वनियमविरहात् । अविवक्षितव्यङ्ग्यककाव्यस्य चित्रत्वोपचारस्तु विस्मयजनकच्छन्दोऽलङ्कारादिसम्बन्धात्, प्रधानानुकारिगजतुरगादिचित्रवत् काव्यानुकरणाद्वा, बोध्यः । तदेतत्, अग्रे तृतीयोद्द्योते—

'प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैवं व्यवस्थितम् ॥
द्विधा काव्यं, ततोऽन्यद्यत्तच्चित्रमभिधीयते' ॥

इति कारिकाया व्याख्यानावसरे दर्शयिष्यामः ॥

पुनरलङ्कारगुणादिष्वेव ध्वनिमन्तर्भावयतो मतमुद्दिश्य खण्डयति—

यदप्युक्तम्—'कामनीयकमनतिवर्तमानस्य तस्योक्तालङ्कारादिप्रकारेष्वन्तर्भावः' इति, तदप्यसमीचीनम् । यतो वाच्यवाचकमात्राश्रयिणि प्रस्थाने व्यङ्ग्यव्यञ्जकसमाश्रयेण व्यवस्थितस्य ध्वनेः कथमन्तर्भावः ।

केवलं शब्दमर्थं वाऽऽश्रित्य तिष्ठत्स्वलङ्कारेषु, व्यङ्ग्यार्थ—पदवाक्यप्रभृतिनानाविधव्यञ्जकाश्रयेण विद्यमानो ध्वनिर्नान्तर्भवितुमर्हतिं, विभिन्नाश्रयत्वादितिभावः । आदिपदेन गुणानां रीतीनां वृत्तीनां च सङ्ग्रहः । अन्यथाऽलङ्कारमात्रान्तर्भावस्याधुनैव निराकृतत्वे पुनस्तन्निराकरणं छायां क्षपयेत् ॥

तत्र हेतुमाह—

वाच्यवाचकचारुत्वहेतवो हि तस्याङ्गभूताः, न तु तदेकरूपा एवेति प्रतिपिपादयिष्यमाणत्वात् ।

अनुप्रासोपमादयो हि यतो ध्वनेरुपकारकाः, तस्मान्न ध्वनिस्वरूपाः, कार्यकारणवदुपकार्योपकारकयोस्तादात्म्यानङ्गीकारात् ॥

समाहरति—

परिकरश्लोकश्चात्र—

अस्तीति शेषः । परिकरोति प्रकृतार्थमधिकाधानेनोपकरोतीति परिकरः ॥

'व्यङ्ग्यव्यञ्जकसम्बन्धनिबन्धनतया ध्वनेः ।
वाच्यवाचकचारुत्वहेत्वन्तःपातिता कुतः ॥'

व्यङ्ग्यव्यञ्जकयोः सम्बन्धो व्यञ्जना, तन्निबन्धनतया तन्मूलकत्वेन भासमानस्य, वाच्यवाचकचारुत्वहेतुष्वलङ्कारेषु, ध्वनेरन्तर्भावः कुतः स्यादित्यर्थः ॥

इदानीं गुणीभूतव्यङ्ग्येष्वलङ्कारविशेषेषु, ध्वनेरन्तर्भावमाशङ्क्य क्रमशो निरस्यति—

ननु यत्र प्रतीयमानस्यार्थस्य वैशद्येनाप्रतीतिः, स नाम मा भूद्ध्वनेर्विषयः । यत्र तु प्रतीतिरस्ति यथा समासोक्त्याक्षेपानुक्तनिमित्तविशेषोक्तिपर्यायोक्तापन्हुतिदीपकसङ्करालङ्कारादौ, तत्र ध्वनेरन्तर्भावो भविष्यतीत्यादि निराकर्तुमभिहितम् 'उपसर्जनीकृतस्वार्थौ' इति ।

यत्रानुप्रासाद्यलङ्कारेषु, व्यङ्ग्यस्याप्रतीतिः, यत्रचोपमाद्यलङ्कारेषु तस्य स्फुट-

तया ऽप्रतीतिः, तत्र ध्वनेरन्तर्भावो नास्ताम्। येषु पुनः समासोक्त्यादिष्वलङ्कारेषु व्यङ्ग्यस्य स्फुटतयैव प्रतीतिः, तत्र कथं नान्तर्भावः स्यादिति चेत्? उच्यते—ध्वनौ व्यङ्ग्यापेक्षया वाच्यवाचकयोरुपसर्जनत्वं भवति, गुणीभूतव्यङ्ग्ये समासोक्त्यादौ तु व्यङ्ग्यस्योपसर्जनत्वाद्वाच्यस्यैव प्राधान्यात्तदभावः। कारिकांशोक्तेर्भूतकालिकतया 'अभिहितम्' इत्यत्र क्तप्रत्ययः॥

कारिकांशं विवृण्वन्नुक्तमर्थं समर्थयति—

**अर्थो गुणीकृतात्मा, गुणीकृताभिधेयश्च शब्दो वा यत्रार्थान्तरमभिव्यनक्ति स ध्वनिरिति। तेषु कथं तस्यान्तर्भावः। व्यङ्ग्यप्राधान्ये हि ध्वनिः। न चैतत्समासोक्त्यादिष्वस्ति।**

इतिर्हेतौ। यतः समासोक्त्यादिषु व्यङ्ग्यस्य सत्त्वेऽपि, वाच्योपस्कारकत्वेन गुणीभावान्न प्राधान्यम्, ध्वनौ तु तदेव प्रधानम्, तस्मात्तेषु समासोक्त्यादिषु, तस्य ध्वनेरन्तर्भावः कथं स्यात्। न हि व्यङ्ग्यप्राधान्यमन्तरेण ध्वनिः, न वा तदलङ्कारेषु व्यङ्ग्यस्य प्राधान्यं सम्भवतीति नान्तर्भाव इति सारम्॥

तत्र प्रथमोपात्तत्वात् समासोक्तौ प्रथमं व्यङ्ग्याप्राधान्यमुदाहरणोपन्यासेन दर्शयति—

**समासोक्तौ तावत्—**

तावत् पूर्वम्।

> 'प्रकृतार्थेन वाक्येन तत्समानैर्विशेषणैः।
> अप्रस्तुतार्थकथनं समासोक्तिरुदाहृता'॥

इत्युद्भटलक्षितायां समासोक्तौ, वाच्येनानुगतमित्यादिनाऽन्वयः॥

सायंसन्ध्यां वर्णयति—

> **'उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम्।**
> **यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद्गलितं न लक्षितम्॥'**

उपोढो धृतः, रागः सन्ध्याशोणिमा प्रेमा च, येन, स उपोढरागस्तेन शशिना नायकेन च विलोला उदयरभसेन प्रियालोकजविभ्रमेण च चञ्चलाः, तारका उडवः-कनीनिकाश्च यत्र, तादृशं निशाया नायिकायाश्च, मुखं प्रदोषरूपाग्रिमाङ्गम् वदनञ्च, तथा तेन प्रकारेण द्रुतमितियावत्, वात्स्यायनोक्तप्रकारेण च, गृहीतमुद्दीपितं चुम्बितुमात्तञ्च यथा पुरोऽपि प्राच्यामपि पुरस्तादपि च, रागादुदयारुण्यात् प्रेमोद्रेकाच्च,

गलितं विनष्टं पतितञ्च, समस्तमखिलम्, तिमिरांशुकं तमःपटलं तिमिराभवसनञ्च, तया हेतुभूतया निशया कर्त्र्या नायिकया च, न लक्षितं नावलोकितमित्यर्थः । तथाहि—'अंशुकं शुक्लवस्त्रे स्याद्वस्त्रमात्रोत्तरीययोः' इति रभसः । 'रागोऽनुरक्तौ मात्सर्ये क्लेशादौ लोहितादिषु' इति विश्वश्च ।

अत्र रागस्य वहनकर्मत्वेन गौरवातिशयः, मुखस्य विलोलतारकत्वेन स्मरसमरसम्भ्रमः, तेन गलितांशुकदर्शनाभावेन च नायिकायाः प्रमोदातिशयद्वारा प्रागल्भ्यं च सूच्यते । 'तया निशयेति कर्तृपदम् । नचाचेतनायाः कर्तृत्वमुपपन्नम्, इति शब्देनैवात्र नायकव्यवहार उन्नीतो ऽभिधेय एव, न व्यङ्ग्य इत्यत एव समासोक्तिः' इति चन्द्रिका नायकव्यवहारस्याभिधेयत्वाभावात्प्रकृतग्रन्थप्रातिकूल्यादुपपत्तिचिन्तामपेक्षते ॥

प्रकृतसङ्गतिमाह—

**इत्यादौ व्यङ्ग्येनानुगतं वाच्यमेव प्राधान्येन प्रतीयते ।**

व्यङ्ग्येनानुगतमुपस्कृतम् । अत्र यद्यपि श्लिष्टविशेषणमहिम्नाऽवाच्ययोरपि शृङ्गाररसालम्बनयोर्नायकयोर्निशाशशिशब्दाभ्यां प्रतीतिर्जायते, किन्तु, व्यङ्ग्ययोस्तद्व्यवहारयोरारोपा दारोपितनायिकाव्यवहारा वाच्या निशा, आरोपितनायकव्यवहारो वाच्यः शशी च प्राधान्येन वाक्यार्थबोधविषयाविति व्यङ्ग्यस्य गुणीभावान्न ध्वनिः, किन्त्वलङ्कार एवेत्याशयः ॥

तदेवाहवृत्तिकारः—

**समारोपितनायिकानायकव्यवहारयोर्निशाशशिनोरेव वाक्यार्थत्वात् ।**

वाक्यार्थत्वं प्राधान्येन वाक्यार्थबोधविषयत्वम् । नायिकानायकेतित्वेकशेषावश्यम्भावाद्दुर्घटम्, किन्तु नायिकया सहितो नायक इति शाकपार्थिवादेराकृतिगणत्वान्मध्यमपदलोपी समासो ऽत्र बोध्यः । तथासति नायिकायाश्शाब्दप्रतीतावप्राधान्ये ऽप्यार्थप्रतीतौ तदबाधः । एकशेषे प्रायो झटिति प्रतीतिविरहादेवमुक्तिः ॥

अथाक्षेपालङ्कारे व्यङ्ग्याप्राधान्यं दर्शयितुमाचष्टे—

**आक्षेपेऽपि व्यङ्ग्यविशेषाक्षेपिणो वाच्यस्यैव चारुत्वम् । प्राधान्येन वाक्यार्थ आक्षेपोक्तिसामर्थ्यादेव ज्ञायते ।**

"निषेधो वक्तुमिष्टस्य यो विशेषाभिधित्सया ॥
वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मतः" ॥

इति मम्मटभट्टोक्तलक्षणस्याक्षेपस्य,—

"स्मरशरविधुराया भणामि सख्याः कृते किमपि ॥
क्षणमिह विश्रम्य सखे ! निर्दयहृदयस्य किं भणाम्यथवा ॥
तव विरहे हरिणाक्षी निरीक्ष्य नवमालिकां दलिताम् ॥
हन्त नितान्तमिदानी माः ! किं हतजल्पितैरथवा ॥"

इत्युदाहरणयोः वाच्यो वचननिषेधः कथनस्य प्रस्तुतत्वादिष्टत्वाच्च बाधेनास्कन्दितो निषेधाभासत्वेन पर्यवस्यन् विधिशवलं वक्तव्यवैलक्षण्यवैभवं व्यनक्ति। तत्रागूरितव्यङ्ग्यमन्तरेण बाधग्रस्ततया वाच्यार्थबोधस्यैवानिष्पत्त्या व्यङ्ग्यस्य वाच्यबोधनिर्वाहकत्वेन गुणीभावः । आक्षेपशब्द एव व्यङ्ग्यावापं विना वाच्यार्थबोधानिर्वाहं कथयति । तथाच स्फुटमेव व्यङ्ग्यस्य वाच्याङ्गत्वम् ।

यत्तु वामनेन 'उपमानाक्षेपः' इत्युपमानतिरस्कार आक्षेपोऽलङ्कार उक्तः, तन्न । तस्य प्रतीपभेदेऽन्तर्भावात् ॥

तत्र हेतुमाह—तथाहि—

**तत्र शब्दोपारूढरूपो विशेषाभिधानेच्छया प्रतिषेधरूपो य आक्षेपः स एव व्यङ्ग्यविशेषमाक्षिपन्मुख्यं काव्यशरीरम् ।**

तत्राक्षेपालङ्कारे । शब्दादुपारूढं प्रकटीभूतं रूपं यस्य, सः निषेधात्मको य आक्षेपः, स निषेधरूपो वाच्य एव, न तु व्यङ्ग्यः, व्यङ्ग्यविशेषं स्वान्वयबोधोपपत्तय आक्षिपन्नध्याहरन्, काव्यस्य वाच्यवाचकवपुषः, मुख्यं चमत्कारिव्यङ्ग्यप्रसाधितत्वात् प्रधानं, शरीरम् , अस्तीति शेषः । आक्षेपे वाच्येनेष्टनिषेधेन बाध्यमानेन स्वोपपादकतयाऽङ्गभूत एव व्यङ्ग्य आक्षिप्यत इति तत्रापि व्यङ्ग्यस्यगुणीभूतत्वान्न ध्वनेरन्तर्भाव इत्यभिसन्धिः ॥

ननु तत्र वाच्यस्यैव कुतः प्राधान्यमित्यत आह—

**चारुत्वोत्कर्षनिबन्धना हि वाच्यव्यङ्ग्ययोः प्राधान्यविवक्षा ।**

हि यतो यत्र वाच्ये चारुत्वस्योत्कर्ष आधिक्यम्, तत्र वाच्यस्य प्राधान्यम् । यत्र च व्यङ्ग्ये तदुत्कर्षः, तत्र तस्यैव प्राधान्यं विवक्षितं भवति, विवक्षायास्तन्मूलकत्वात् । प्रकृते निषेधाभासतया पर्यवसानाद्वाच्यस्य निषेधस्यैव तदुत्कर्ष इतिप्राधान्यं बोध्यम् ॥

तत्र निदर्शनं दर्शयति—

यथा—'अनुरागवती संध्या दिवसस्तत्पुरःसरः ।
अहो दैवगतिः कीदृक्तथापि न समागमः ॥'

यद्यपि सन्ध्या नायिका च, अनुरागवती लौहित्यभाक् प्रेमवती च, अस्तीति शेषः । दिवसो नायकश्च, तस्याः पुरस्सरो ऽग्रगामी सम्मुखश्चास्ति । अहो आश्चर्यम्, कीदृग् विलक्षणाऽचिन्त्या, दैवस्य विधेः, गतिरस्ति, यत् तथापि तयोः समागमः सम्मेलनं सम्भोगश्च न भवतीत्यर्थः । इह प्रस्तुते ऽर्थे ऽभिधाया नियन्त्रणादपरार्थस्य व्यङ्ग्यतया न श्लेषः, किन्तु श्लिष्टविशेषणमहिम्ना नायकयोर्वृत्तस्यावगतिरिति समासोक्तिरेव । नायकरूपव्यङ्ग्यापेक्षया ऽऽरोपिततद्वृत्तसन्ध्यादिवसात्मकवाच्यस्यैव चमत्कारिता ॥

तदाह वृत्तिकृत्—

अत्र सत्यामपि व्यङ्ग्यप्रतीतौ वाच्यस्यैव चारुत्वमुत्कर्षवदिति तस्यैव प्राधान्यविवक्षा ।

व्याख्यातम् । श्लोके ऽस्मिन् वामनमतेनाक्षेपः, भामहमतेन तु समासोक्तिरित्येकत्रोभयोः समावेशमालोक्योदाजहार ग्रन्थकृदिति लोचने स्फुटम् ॥

प्राधान्यविवक्षां व्यपदेशबीजत्वेन व्यवस्थापयन् दृष्टान्तमाचष्टे—

यथा च दीपकापह्नुत्यादौ व्यङ्ग्यत्वेनोपमायाः प्रतीतावपि प्राधान्येनाविवक्षितत्वान्न तया व्यपदेशस्तद्वदत्रापि द्रष्टव्यम् ।

'सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम् ।
सैव क्रियासु बह्वीषु कारकस्येति दीपकम् ॥'

इति मम्मटलक्षितस्य दीपकालङ्कारस्य—

'सञ्जहार शरत्कालः कदम्बकुसुमश्रियः ॥
प्रेयोवियोगिनीनां च निश्शेषसुखसम्पदः ॥' इत्युदाहरणे,

'प्रकृतस्य निषेधेन यदन्यत्वप्रकल्पनम् ॥
साम्यादपह्नुतिः' इति पीयूषवर्षलक्षिताया अपह्नुतेः ।

"एतद्धि न तपः सत्यमिदं हालाहलं विषम् ।
विशेषतः शशिकला–कोमलानां भवादृशाम्॥' ॥ इत्युदाहरणे च,

यथा कदम्बकुसुमश्री–वियोगिनीसुखसम्पदां तपोहालाहलयोश्चोपमा व्यज्यते,

किन्तु तदपेक्षयैकधर्मान्वितप्रस्तुताप्रस्तुतधर्मिरूपस्य, उपमेयापह्नवोपमानस्थापनात्मकस्य च वाच्यस्यैव चमत्कारितया प्राधान्यात् तेनैव व्यवहारः, न तूपमया। सा तु भित्तिभूतैवान्यत्रातिशयोक्तिवत्। तदुक्तं चित्रमीमांसायाम्—

'उपमैका शैलूषी सम्प्राप्ता चित्रभूमिकाभेदान्॥
रञ्जयति काव्यरङ्गे नृत्यन्ती तद्विदां चेतः॥' इति।

तथाऽऽक्षेपे ऽपि व्यङ्ग्यसत्त्वे ऽप्यतिसुन्दरेण वाच्येनैव व्यपदेश इति भावः॥

अथानुक्तनिमित्तविशेषोक्तौ व्यङ्ग्याप्राधान्यमाह—

**अनुक्तनिमित्तायामपि विशेषोक्तौ—**

'यत्सामग्र्येऽपि हेतूनां फलानुत्पत्तिवन्धनम्।
विशेषस्याभिधित्सातस्तद्विशेषोक्तिरुच्यते॥'

इत्यद्भुटेन लक्षिता विशेषोक्तिः, सामग्रीसत्त्वेऽपि कार्यानुत्पत्तिप्रयोजकोपादानानुपादानाभ्यां द्विधा।

केचित्तु निमित्तस्याचिन्त्यत्वेन तृतीयमप्यस्याः प्रकारं वदन्ति। परे तु द्वितीयभेद एव तमन्तर्भावयन्ति। तत्रोक्तनिमित्तायां तस्यां निमित्तस्य वाच्यतैव। अचिन्त्यनिमित्तायां तस्य व्यङ्ग्यत्वेऽपि निगूढत्वम्, तेन 'नास्यां व्यङ्ग्यस्य सद्भावः' इतिलोचने व्यङ्ग्यपदं चमत्कारिव्यङ्ग्यपरमवगन्तव्यम्। अनुक्तनिमित्तायान्तु व्यङ्ग्यस्य सद्भावेऽपि नैव प्राधान्यम्। तत्रोक्तनिमित्ताचिन्त्यनिमित्तप्रकारयोः—

'कर्पूर इव दग्धोऽपि शक्तिमान् यो जने जने।
नमोऽस्त्ववार्यवीर्याय तस्मै मकरकेतवे॥' इति।
'स एकस्त्रीणि जयति जगन्ति कुसुमायुधः।
हरताऽपि तनुं यस्य शम्भुना न हृतं बलम्॥'

इति च क्रमेणोदाहरणे अप्रासङ्गिकत्वादनुक्त्वाऽनुक्तनिमित्तां तामुदाहरति—

**'आहूतोऽपि सहायैरेमीत्युक्त्वा विमुक्तनिद्रोऽपि।
गन्तुमना अपि पथिकः संकोचं नैव शिथिलयति॥'**

सहायैः सहचरैः, सहगन्तुमाहूत आकारितोऽपि, एम्यागच्छामीत्युक्त्वा विमुक्ता निद्रा येन तादृशोऽपि, तथा गन्तुमनाः प्रस्थातुकामोऽपि, पथिकः, सङ्कोचं नेत्रगात्राकुञ्चनं, नैव शिथिलयति नैवोनयतीत्यर्थः॥

प्रकृतोक्तिसङ्गतिमाह—

**इत्यादौ व्यङ्ग्यस्य प्रकरणसामर्थ्यात्प्रतीतिमात्रम् । न तु तत्प्रतीतिनिमित्ता काचिच्चारुत्वनिष्पत्तिरिति न प्राधान्यम् ।**

इह सहचरकृताह्वानादिहेतूनां सत्त्वेऽपि, सङ्कोचशिथिलीकरणरूपकार्य्याभावप्रयोजकस्य, निमित्तस्य उद्भटमते शीतकृतार्त्तेः, रुय्यकमते प्रियतमास्वप्नसमागमानुध्यानस्य यद्यपि व्यङ्ग्यतयैव प्रतीतिः, किन्तु तदपेक्षयाऽपि तदुपपादितस्य सङ्कोचशिथिलीकरणाभावरूपवाच्यस्यैव चारुत्वेन प्राधान्यमिति नात्र ध्वनेरन्तर्भावः ॥

अथ पर्य्यायोक्ते ध्वनेरन्तर्भावं दर्शयति—

**पर्यायोक्तेऽपि यदि प्राधान्येन व्यङ्ग्यत्वं, तद्भवतु नाम तस्य ध्वनावन्तर्भावः । न तु ध्वनेस्तत्रान्तर्भावः । तस्य महाविषयत्वेनाङ्गित्वेन च प्रतिपिपादयिष्यमाणत्वात् । न पुनः पर्यायोक्ते भामहोदाहृतसदृशे व्यङ्ग्यस्यैव प्राधान्यम् । वाच्यस्य तत्रोपसर्जनीभावेनाविवक्षितत्वात् ।**

'गम्यस्यापि भङ्ग्यन्तरेणाभिधानं पर्य्यायोक्तम्'

इति रुय्यकलक्षितस्य पर्य्यायोक्तस्य—

'चक्राभिघातप्रसभाज्ञयैव चकार यो राहुवधूगणस्य ।
आलिङ्गनोद्दामविलासवन्ध्यं रतोत्सवं चुम्बनमात्रशेषम् ॥'

इत्युदाहरणे, राहुशिरश्छेदात्मनो व्यङ्ग्यस्य कारणस्य नैव तादृशी चारुता, यादृशी वाच्यस्य तत्कार्यस्येति न ध्वनेस्तत्रान्तर्भावः, वाच्यस्याप्राधान्येनाविवक्षणात् ।

यैस्तु लक्षणघटकमभिधानपदं प्रत्यायनपरमेव नत्वभिधाप्रयोज्यबोधजननपरं गृहीत्वा 'निश्शेषच्युतचन्दनंस्तनतटम्' इत्यादौ प्रतीयमानप्राधान्ये स्थापितेऽपि, पर्यायोक्ते ध्वनिरन्तर्भाव्यते, तैः पुनरिदं विचारणीयम्, वाक्यार्थप्राधान्यमलङ्कारत्वं चेति विरुद्धौ धर्मौ । प्रकृते व्यङ्ग्यस्य यदि प्राधान्यम्, तदा नालङ्कारता, अथालङ्कारता, न तर्हि प्राधान्यमिति । आस्तां वा कथञ्चिदुभयमपि, तथाऽपि पर्यायोक्तापेक्षया बृहदाकारो ध्वनिस्तत्र नान्तर्भवितुमर्हति, सुमेरुरिव सूचीसुषिरे । अपि तु तदेवात्र प्रविशेत्, सुरधुनीस्रोत इव सरस्वति । इदमुद्भटाक्षेपसमाधानम् ।

वस्तुतस्तु पर्यायोक्ते व्यङ्ग्यस्य प्राधान्यमेव नास्तीति का चिन्ता तत्रान्त-

र्भावस्य, आलङ्कारिकशेखरेण भामहेनोक्ते—

गृहेष्वध्वसु वा नान्नं भुञ्ज्महे यदधीतिनः ।
विप्रा न भुञ्जते 'तच्च रसदाननिवृत्तये ॥'

इत्युदाहरणे, पर्यायेण रसदानविषेधरूपव्यङ्ग्यस्याचारुताया व्यक्तत्वात् । अत एव तेनैव 'तच्च रसदाननिवृत्तये' इत्यनेन व्यङ्ग्यं स्फुटीकृतम् ॥

अपह्नुतिदीपकयोर्ध्वनिप्रवेशं निरस्यति—

**अपह्नुतिदीपकयोः पुनर्वाच्यस्य प्राधान्यं व्यङ्ग्यस्यानुयायित्वं प्रसिद्धमेव ।**

तयोर्वाच्यस्यैव प्राधान्यम्, उपमारूपव्यङ्ग्यस्य यथाऽप्राधान्यम्, तथा प्रागेव दर्शितम् ॥

अथध्वनेः सङ्करानन्तर्भावे वाच्ये, प्रथममादिमभेदे तमाह—

**संकरालंकारेऽपि यदाऽलंकारोऽलंकारान्तरच्छायामनुगृह्णाति, तदा व्यङ्ग्यस्य प्राधान्येनाविवक्षितत्वान्न ध्वनिविषयत्वम् ।**

छायाऽनुग्रहः शोभाजननम् । विषयता लक्ष्यत्वम् ।

"नीरक्षीरनयायत्र सम्वन्धः स्यात् परस्परम् ।
अलङ्कृतीनामेतासां, सङ्करः स उदाहृतः ॥"

इतिविद्यानाथोक्तलक्षणो दुग्धजलन्यायेनालङ्काराणां मिथस्समावेशः सङ्करः । सचोद्भटमते चतुर्धा । तत्र

'अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वं तु सङ्करः'

इतिमम्मटोक्तेरलब्धस्वातन्त्र्याणामेषामनुग्राह्यानुग्राहकभावे प्रथमः प्रकारो यथा कुमारसम्भवे—

'प्रवातनीलोत्पलनिर्विशेषमधीरविप्रेक्षितमायताक्ष्याः ॥
तयागृहीतं नु मृगाङ्गनाभ्यस्ततो गृहीतं नु मृगाङ्गनाभिः ॥'

इत्यत्र पार्वती–मृगीविलोकनयोर्व्यज्यमानोपमा वाच्यस्य ससन्देहस्य सुषमान्तनोतीत्यङ्गमेव, न तु प्रधानम् । अतो न ध्वनेस्तत्र प्रवेशः सम्भवति ॥

द्वितीयेऽपि तद्भेदे ध्वनेः प्रवेशं निरस्यति—

**अलंकारद्वयसंभावनायां तु वाच्यव्यङ्ग्ययोः समं प्राधान्यम् ।**

'एकस्य च ग्रहे न्यायदोषाभावादनिश्चयः' इतिमम्मटोक्तेरलङ्काराणामेकतमपरिग्रहे साधकबाधकप्रमाणविरहात्समवाये सन्देहरूपो द्वितीयः सङ्करप्रकारः ।

यथा—'नयनानन्ददायीन्दोर्बिम्बमेतत्प्रसीदति ।
अधुनाऽपि निरुद्धाशमविशीर्णमिदं तमः ॥'

इत्यत्र कामोद्दीपकः कालो ऽयं वर्तते किमिति पर्यायोक्तम्, वदनमिन्दुबिम्बतया ऽध्यवसितमित्यतिशयोक्तिर्वा, अथवैतदितिनिर्दिष्टे वदन इन्दुबिम्बत्वारोपाद्रूपकम्, किमुत तयोः समुच्चयविवक्षया दीपकम्, इत्येवं नानाऽलङ्कारसङ्करे गुणप्रधानभावयोर्वाच्यव्यङ्ग्यतयोश्च निश्चेतुमशक्यत्वे कथं ध्वनेरन्तर्भावः ।

यथापि वाच्यालङ्काराणामेकवाचकानुप्रवेशलक्षणस्तृतीयः, शब्दार्थालङ्काराणामेकत्र समावेशरूपश्चतुर्थश्च सङ्करप्रकारस्तेनैव निरदेशि, तयोस्तु सर्वथा प्रतीयमानप्राधान्यासम्भवान्न ध्वनिप्रवेशसम्भावनाऽपि । नव्यास्तु चतुर्थं प्रकारं संसृष्टावन्तर्भावयन्तस्त्रैविध्यमेव सङ्करस्य मन्यन्ते । तदुक्तं दर्पणे—

'अङ्गाङ्गित्वेऽलङ्कृतीनां तद्वदेकाश्रयस्थितौ ।
सन्दिग्धत्वे च भवति, सङ्करस्त्रिविधः पुनः ॥' इति ।

ननु—'होइ ण गुणाणुराओ जड़ाण णवरं पसिद्धिसरणाण ।
किर पह्नवइ ससिमणी चन्दे णपिआमुहे दिट्ठे ॥'
'भवति न गुणानुरागो जडानां केवलं प्रसिद्धिशरणानाम् ।
किल प्रस्नौति शशिमणिश्चन्द्रे न प्रियामुखे दृष्टे ॥' इतिच्छाया ।

इत्यत्र सङ्करेऽपि प्रस्तुतत्वाद्वाच्योऽर्थान्तरन्यासोऽङ्गताम्, व्यतिरेकापह्नुती त्वतिचारुतया प्रतीयमाने अङ्गितामेव वहत इति व्यङ्ग्यप्राधान्यान्न कथं ध्वनेः प्रवेश इत्यत आह—

**अथ वाच्योपसर्जनीभावेन व्यङ्ग्यस्य तत्रापि व्यवस्थानं, तदा सोऽपि ध्वनिविषयोऽस्तु, न तु स एव ध्वनिरिति वक्तुं शक्यम् । पर्यायोक्तनिर्दिष्टन्यायात् ।**

अथेति यद्यर्थे । उपसर्जनीभावोऽप्राधान्यम् । तत्र सङ्करे । अयमर्थः—यदि सङ्करे व्यङ्ग्यप्राधान्यं क्वचिदस्ति, तदा तस्यापि ध्वनावेवान्तःपातोऽस्तु । यथा ध्वनेर्महाविषयतया पर्यायोक्ते नान्तर्भावः, किन्तु तदेवालङ्कारध्वनिनाम्ना ध्वनावन्तर्भावितम्, तद्वदत्रापि तादृशसङ्करस्यैव ध्वनौ प्रवेशः स्वीक्रियताम् ॥

सामान्यतया सङ्करे पुनर्ध्वनेरप्रवेशं व्याहरति—

**अपि च संकरालंकारस्य संकरोक्तिरेव ध्वनिसंभावनां निराकरोति।**

नीरक्षीरवदलङ्कारमिश्रणे हि सङ्करः, न च मिश्रणे कस्यचिन्मुख्यत्वमपरस्य गुणत्वं वा शक्यमवगन्तुम्, व्यङ्ग्यप्राधान्यानवधारणे च कुतो ध्वनेः सम्भावनेति सारम्। इहार्थानुरोधेन, 'व्यङ्ग्यसम्भावनानिरासप्रकारम्' इतिलोचनलेखेन च निरे-त्यधिकं पाठे कल्पितम्॥

'सङ्करालङ्कारादौ' इत्यादिपदगृहीतायामप्रस्तुतप्रशंसायां सम्भावितं ध्वनेरन्त-र्भावं निराकरोति—

**अप्रस्तुतप्रशंसायामपि यदा सामान्यविशेषभावान्निमित्तिनिमित्तभावा-द्वाऽभिधीयमानस्याप्रस्तुतस्य प्रतीयमानेन प्रस्तुतेनाभिसम्बन्धः, तदाऽभि-धीयमानयप्रतीयमानयोः सममेव प्राधान्यम्।**

'अप्रस्तुतात् सामान्यविशेषभावे, कार्यकारणभावे, सारूप्ये च प्रस्तुतप्रतीता-वप्रस्तुतप्रशंसा'इतिरुय्यकलक्षिताया अप्रस्तुतप्रशंसायाः प्रकारपञ्चकम्। तत्रा-प्रस्तुतात्सामान्याद्वाच्यात् प्रस्तुतस्य विशेषस्य व्यङ्ग्यत्वे प्रथमो यथा—

'पादाहतं यदुत्थाय मूर्धानमधिरोहति॥
स्वस्थादेवापमानेऽपि देहिनस्तद्वरं रजः॥'

इत्यत्र प्रस्तुतादपमानेऽपि स्वस्थात्सामान्याद् विशेषस्य प्रस्तुतस्य स्वस्य गम्यत्वम्।

द्वितीयो यथा—

'अङ्काधिरोपितमृगश्चन्द्रमा मृगलाञ्छनः'॥
केसरी निष्ठुरक्षिप्तमृगयूथो मृगाधिपः॥'

इत्यत्र केसरिणो मृगाधिपत्याद्विशेषात् सामान्यस्य क्रूरप्रभुत्वस्य गम्यत्वम्।

तृतीयो यथा—

नितरां परुषा सरोजमाला न मृणालानि विचारपेशलानि।
यदि कोमलता तवाङ्गकानामथ का नाम कथाऽपि पल्लवानाम्'॥

इत्यत्र सरोजमालादितिरस्कारात्मनः कार्यान्नायिकाऽङ्गमार्दवविशेषस्य कारणस्य गम्यत्वम्। कार्यकारणभावस्त्वत्र प्रतीतिद्वारको बोध्यः।

तुरीयो यथा—

'आनम्य वल्गुवचनैर्विनिवारिते ऽपि रोषात् प्रयातुमुदिते मयिदूरदेशम्॥
बाला कराङ्गुलिनिदेशवशवँदेन, क्रीड़ाविडालशिशुना ऽऽशु रुरोध मार्गम्॥'

इत्यत्र मार्गरोधनात्कारणात् प्रवासान्निवृत्तेः कार्यस्य गम्यत्वम्। पञ्चमः प्रकारस्त्वग्र उदाहरिष्यते। उदाहृतप्रकारचतुष्टये न ध्वनिरन्तर्भवितुमर्हति, व्यङ्ग्यस्य वाच्यानतिशायित्वात्। अत एवाह जगन्नाथः—'कार्यकारणसामान्यविशेषभावमूलास्तु चत्वारः प्रकारा गुणीभूतव्यङ्ग्यस्यैव भेदाः, अभिधादिक्लेशशून्यस्य केवलागूरणमात्रस्य ध्वनित्वप्रयोजकत्वात्' इति॥

नन्वत्र प्रस्तुताप्रस्तुतयोः कथं तुल्यं प्राधान्यमित्यतआह—

**यदा तावत्सामान्यस्याप्रस्तुतस्याभिधीयमानस्य प्राकरणिकेन विशेषेण प्रतीयमानेन संवन्धस्तदा विशेषप्रतीतौ सत्यामपि प्राधान्येन तस्य सामान्येनाविनाभावात्सामान्यस्यापि प्राधान्यम्।**

अविनाभावो व्याप्तिः। यदि वाच्यात्सामान्याद् व्यङ्ग्यस्य विशेषस्य प्रस्तुतत्वात् प्राधान्येन प्रतीतिः, तर्हि सामान्यस्याप्रस्तुतस्यापि प्राधान्येनैव प्रतीतिः, सामान्यविशेषयोर्व्याप्तेः। तथाहि—न खलु विशेषाधिकरणे सामान्याभावः प्रतीयते।

**यदाऽपि विशेषस्य सामान्यनिष्ठत्वं तदाऽपि सामान्यस्य प्राधान्ये सामान्ये सर्वविशेषाणामन्तर्भावाद्विशेषस्यापि प्राधान्यम्।**

सामान्ये निष्ठा पर्यवसानं यस्य तत्सामान्यनिष्ठं तस्य भावस्तत्त्वं सामान्यव्यञ्जकत्वमित्यर्थः। सामान्यं हि विशेषात्मकमेव। अत एव सामान्याभावस्य विशेषाभावकूटप्रयोज्यत्वम्। एवञ्च सामान्यस्य प्राधान्ये विशेषस्यापि प्राधान्यमर्थादापतितमितिकेवलव्यङ्ग्यस्यैव प्राधान्याभावान्न ध्वनिप्रवेशः॥

**कार्यकारणभावे चायमेव न्यायः।**

सत्कार्यवादसिद्धान्ते कार्यकारणयोस्तादात्म्याङ्गीकारात्कार्यस्य प्राधान्ये कारणस्यापि प्राधान्यम्, एवं कारणस्य प्राधान्ये कार्यस्यापि तत्त्वं स्वतःसिद्धमिति पूर्ववन्न ध्वनिप्रवेशस्तत्रापि॥

'अथपञ्चमेऽपि प्रकारे ध्वनेरप्रवेशं दर्शयति—

**यदा तु सारूप्यमात्रवशेनाप्रस्तुतप्रशंसायामप्रकृतप्रकृतयोः संबन्धस्तदाऽप्यप्रस्तुतस्य सरूपस्याभिधीयमानस्य प्राधान्येनाविवक्षायां ध्वनावेवान्तःपातः। इतरथा त्वलंकारत्वमेव।**

मात्रशब्दः सामान्यविशेष्यभावदिं व्यवच्छिनत्ति।

आवद्धकृत्रिमसटाजटिलांसभित्तिरारोपितो मृगपतेः पदवीं यदि श्वा।
मत्तेभकुम्भतटपाटनलम्पटस्य, नादं करिष्यति कथं हरिणाधिपस्य॥'

इत्यत्राप्रस्तुतस्य वाच्यस्य शुनो निन्दया विद्वद्वरेण्यत्वं वेषव्यवहारैरभिनयतो वैधेयस्य प्राकरणिकस्य गर्हा गम्यते। सारूप्यं चोभयोः सम्बन्धः। तत्र यदि वाच्यस्याप्रस्तुतत्वात्कचनाप्राधान्यम्, व्यङ्ग्यस्य च प्राकरणिकत्वेन प्राधान्यमनुभूयेत, तदा तस्यैव ध्वनौ प्रवेशः। किन्तु न ध्वनेर्विपुलाकारस्य तत्र प्रवेशः। एवं वाच्यव्यङ्ग्ययोः प्रस्तुतत्वेऽपि बोध्यम्। नचात्र वाच्यप्रस्तुतत्वमप्रसिद्धम्, खलतिरस्कृतस्य गुणिनः, चञ्चरीकावहेलितस्य चाम्पेयकस्य च सन्निधाने कानने केनचिदुक्ते—

'यन्नादृतस्त्वमलिना मलिनाशयेन, किन्तेन चम्पक! विषादमुरीकरोषि।
विश्वाभिरामनवनीरदनीलवेशाः, केशाः कुशेशयदृशां कुशलीभवन्तु॥'

इत्यत्र वाच्यप्रतीयमानयोश्चम्पकगुणिनोः प्रस्तुतत्वस्य स्फुटत्वात्। नन्वत्र वाच्यस्य प्रस्तुतत्वे ऽप्रस्तुतप्रशंसालक्षणमेव न समन्वियादिति चेत्, न, मुख्यतात्पर्यविषयीभूतार्थभिन्नार्थस्य विवक्षितताया एवात्राप्रस्तुतशब्दार्थत्वेन विवक्षणात्।

ननु तर्हि ध्वनेरप्रस्तुतप्रशंसायाः को भेदः? व्यङ्ग्यस्य प्राधान्ये, नैव कश्चिद् भेदः। अप्राधान्ये तु तदेव ध्वनेरिमां व्यतिरेचयति। तदाह—इतरथेत्यादि। इतरथा प्रस्तुतस्य व्यङ्ग्यस्य विच्छित्त्यजनकत्वादप्राधान्येन, अलङ्कारत्वमेव, न ध्वनित्वम्, व्यङ्ग्याप्राधान्यात्। 'अलङ्कारान्तरमेव' इति पाठे तु इतरथा प्रतीयमानस्याप्यप्रस्तुतत्वें ऽलङ्कारान्तरमन्यो ऽलङ्कारो, नत्वप्रस्तुतप्रशंसैवेति कथञ्चन योजना विधेया। इत्थमेव व्याजस्तुतिपरिकरप्रभृतिषु व्यङ्ग्यसंस्पर्श्यलङ्कारेषु ध्वनेरप्रवेशोऽवसेयः॥

उक्तं निगमयति—

तदयमत्र संक्षेपः—

**'व्यङ्ग्यस्य यत्राप्राधान्यं वाच्यमात्रानुयायिनः ।**
**समासोक्त्यादयस्तत्र वाच्यालंकृतयः स्फुटाः ॥ १४ ॥'**
**'व्यङ्ग्यस्य प्रतिभामात्रे वाच्यार्थानुगमेऽपि वा ।**
**न ध्वनिर्यत्र वा तस्य प्राधान्यं न प्रतीयते ॥ १५ ॥'**

यत्र काव्ये वाच्यमात्रानुयायिनो वाच्यमेवोपकुर्वतो व्यङ्ग्यस्याप्राधान्यम्, तत्र समासोक्त्यादयोऽलङ्कृतयः स्फुटा इति, व्यङ्ग्यस्योपमादाविव, प्रतिभामात्रे केवल-आभासे न तु प्ररोहे, प्ररोहेऽपि वा समासोक्त्यादाविव वाच्यार्थस्यानुगमे ऽनुस-रणे सति वा, यत्र व्यङ्ग्यस्य प्राधान्यं न प्रतीयते तत्र न ध्वनिरितिचार्थः । कारिकाद्वयमिदमग्रिमा च कारिका वृत्तिग्रन्थ इतिकेचित् ।

तर्हि क्व ध्वनेर्विषय इत्याकाङ्क्षायामाह—

**'तत्परावेव शब्दार्थौ यत्र व्यङ्ग्यं प्रति स्थितौ ।**
**ध्वनेः स एव विषयो मन्तव्यः संकरोज्झितः ॥ १६ ॥'**

यत्र काव्ये तत्परावेव व्यङ्ग्यप्रत्यायनतात्पर्येणैवोपात्तौ, शब्दार्थौ, व्यङ्ग्यं प्रति स्थितौ तदुपस्कारकतया तदुन्मुखौ स्तः । स एव, नत्वप्रधानव्यङ्ग्यः सङ्करेणा-लङ्कारमिश्रणेनोज्झितो रहितः शुद्ध इति यावत्, ध्वनेर्विषयो मन्तव्य इत्यर्थः ॥

पर्यवसितमाह—

तस्मान्न ध्वनेरन्यत्रान्तर्भावः ।

तस्मादुक्तहेतोः, अन्यत्रालङ्कारेषु ॥

अलङ्कारादौ ध्वनेरप्रवेशस्य हेत्वन्तरमभिधत्ते—

इतश्च नान्तर्भावः । यतः काव्यविशेषोऽङ्गी ध्वनिरितिकथितः । तस्य पुनरङ्गानि—अलङ्कारा गुणा वृत्तयश्चेति प्रतिपादयिष्यन्ते ।

इतश्चास्मादप्युच्यमानाद्धेतोः, न पुनरुक्तेभ्यएवहेतुभ्यः । यस्माद्ध्वनिरङ्गी-मुख्यः, अलङ्काराश्शब्दार्थस्वभावत्वाद् गुणावृत्तयश्च तद्धर्मात्मत्वात्, तस्याङ्गान्यु-

पस्कर्तारो यतः प्रतिपादयिष्यन्ते, तस्मात् पृथग्भूतकरादिशरीरयोरिवाङ्गाङ्गिनोरलङ्कारादिध्वन्योस्तादात्म्यं न सम्भवति ॥

तदेवाह—

**न चावयव एव पृथग्भूतोऽवयवीति प्रसिद्धः ।**

स्फुटम् ॥

ननु तर्ह्यपृथग्भूतमङ्गमेवाङ्गितां लभेतेत्याशङ्कामपाकरोति—

**अपृथग्भावे तु तदङ्गत्वं तस्य । न तु तत्त्वमेव ।**

यदा करादिषु समवेतं शरीरं, तदैव तेषामङ्गत्वम् । अथच यथा करादीनामङ्गत्वेऽपि न शरीरत्वम्, तथाऽलङ्कारादीनामपि न ध्वनित्वम् । ननु कराद्यवयवातिरिक्तस्य वपुषोऽनुपलम्भादङ्गानामेवाङ्गितेतिचेत्, मैवम्, न्यायनयेऽवयविनः पार्थक्यस्य 'एकोघटः' इत्यादिप्रतीतिवलेन व्यक्तं व्यवस्थापितत्वात् । अपृथग्भावे तूपकारकत्वविरहात्समवायाभावाच्च कथमङ्गत्वमिति चिन्त्यमेव ॥

ननु तदाऽप्रस्तुतप्रशंसापञ्चमप्रकारादौ कथं ध्वनेस्तादात्म्यमित्यत्राह—

**यत्रापि वा तत्त्वम्, तत्रापि ध्वनेर्महाविषयत्वान्न तन्निष्ठत्वमेव ।**

अलङ्काराणामेव ध्वन्यन्तःपातो नतु ध्वनेस्तन्निष्ठत्वं तत्तादात्म्यमिति बोध्यम् ।

ध्वनिलक्षणकारिकाऽवयव मुपयोगाय व्याचष्टे—

**'सूरिभिःकथितः' इति विद्वदुपज्ञेयमुक्तिः, न तु यथाकथञ्चित्प्रवृत्तेति प्रतिपाद्यते ।**

विद्वद्भ्यउपज्ञा प्रथमउपक्रमो यस्याः सेति वहुव्रीहिः । तत्पुरुषेतु 'उपज्ञोपक्रमं तदाद्याचिख्यासायाम्' इत्यनेन पाणिनिसूत्रेण क्लीवत्वं स्यात् । अमूलकत्वे हि प्रमत्तवाक्यवदुपेक्ष्येत ॥

ध्वनिसञ्ज्ञाव्यपदेशक्रमं दर्शयितुं गौरवाय व्यपदेशकर्तॄन् स्तौति—

**प्रथमे हि विद्वांसो वैयाकरणाः, व्याकरणमूलत्वात्सर्वविद्यानाम् ।**

प्रथमे मुख्याः, सर्वविद्यामूलभूतशब्दब्रह्मवित्त्वात् । शब्दब्रह्मणा हि जगदेव व्याप्तम्, किं पुनश्चतुर्दशाष्टादश वा विद्याः ॥

**ते च श्रूयमाणेषु वर्णेषु ध्वनिरिति व्यवहरन्ति ।**

ते शाब्दिकाः श्रवणेन्द्रियगोचरीक्रियमाणेषु ध्वनिरितिव्यपदेशं कुर्वन्ति । तथाहि—'अथवा प्रतीतपदार्थको लोके ध्वनिश्शब्दउच्यते' इति व्याकरणमहाभाष्यम् ।

'यः संयोगवियोगाभ्यां करणैरुपजन्यते ॥
स स्फोटश्शब्दजश्शब्दो ध्वनिरित्युच्यते बुधैः ॥
प्रत्ययैरनुपाख्येयैर्ग्रहणानुग्रहैस्तथा ।
ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्यते ॥
अल्पीयसाऽपि यत्नेन शब्दमुच्चारितं मतिः ।
यदि या नैव गृह्णाति वर्णं वा सकलंस्फुटम् ॥
शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदास्तु वैकृताः ।
ध्वनयःसमुपोहन्ते स्फोटात्मा तैर्न भिद्यते ॥'

इति वाक्यपदीयं च। प्रतीतो ज्ञातः पदार्थो यस्मादितिव्युत्पत्तिर्वर्णात्मकएव शब्दे सङ्गच्छते।

अयमाशयः—समग्रपदप्रत्यक्षमन्तरेण शाब्दबोधो न सम्भवति। वर्णानामाविर्भावतिरोभावयो राशुभावित्वेनैकदा ऽनेकवर्णात्मकपदप्रत्यक्षं तु दुर्घटम्। तस्मान्मध्यमानादाभिव्यङ्ग्यं नित्यमखण्डात्मकं शब्दस्वरूपं शाब्दबोधोपयोगिनं स्फोटं तद्व्यञ्जकं मध्यमानादरूपञ्च ध्वनिं शाब्दिकाःपूर्वमवोचन्। पश्चात्तदनुयायिन आलङ्कारिकाश्चमत्कारि व्यङ्ग्यार्थव्यञ्जकं शब्दार्थोभयंध्वनिमाहुरिति नेयमपूर्वाऽसम्भविनी कल्पनेति नास्तीहभूयपरीक्षाप्रयोजनम्।

तदाह—

**तथैवान्यैस्तन्मतानुसारिभिः सूरिभिः काव्यतत्त्वार्थदर्शिभिर्वाच्यवाचकसम्मिश्रः शब्दात्मा काव्यमिति व्यपदेश्यो व्यञ्जकत्वसाम्याद्ध्वनिरित्युक्तः।**

तद्व्यञ्जनादिस्वीकारे शाब्दिकसरणि मनुसरद्भिरालङ्कारिकै र्वाच्यवाचकाभ्यामर्थशब्दाभ्यां, सम्मिश्रोमिलितः, शब्दात्मा शब्दस्य प्रथमं बुद्धिविषयत्वात्तत्प्रधानः, काव्यमिति व्यवहरणीयो व्यञ्जकत्वसाधर्म्येण मध्यमानादतुल्यो ध्वनिरित्युक्तइत्यर्थः।

इह 'वाच्यवाचकसहितः सम्मिश्र इति मध्यमपदलोपी समासः। 'गामश्वं पुरुषं पशुम्' इतिवत् समुच्चयोऽत्र चकारेण विनाऽपि। तेन वाच्योऽपि ध्वनिः, वाचकोऽपि शब्दोध्वनिः, द्वयोर्व्यञ्जकत्वं ध्वनित्वसाम्यात्। सम्मिश्रिते विभावानुभावसव्वँलनच्छाययेति व्यङ्ग्योऽपि ध्वनिः, ध्वन्यत इति कृत्वा। शब्दनं शब्दः शब्द

व्यापारः, न चासावभिधाऽऽदिरूपः, अपित्वात्मभूतः, सोऽपिध्वननाद्ध्वनिः । काव्य-मितिव्यपदेश्यश्च योऽर्थः सोऽपि ध्वनिः' इति लोचनमालोचनीयम् ॥

'वाग्विकल्पानामानन्त्यात्' इत्यादिनोपक्षिप्तां ध्वनेः क्षोदिष्ठतां निःक्षिपति—

**न चैवंविधस्य ध्वनेर्वक्ष्यमाणप्रभेदतद्भेदसङ्कलनया महाविषयस्य यत्प्रकाशनम्, तदत्र प्रसिद्धालङ्कारविशेषमात्रप्रतिपादनेन तुल्यमिति तद्भावितचेतसां युक्त एवात्र संरम्भः । न च तेषु कथञ्चिदीर्ष्यया कलुषितशेमुषीकत्वमाविष्करणीयम् ।**

वक्ष्यमाणा ये प्रभेदा अविवक्षितवाच्यत्वादयः, तद्भेदा अर्थान्तरसंक्रमितवाच्यत्वादयश्च, तेषां सङ्कलनया गणनया, महाविषयस्य कात्स्न्येंनावधारयितुमशक्यत्वाद् व्यापकस्य, ध्वनेर्यत्प्रकाशनम्, तद् अप्रसिद्धानां परिमिताकारतया सर्वथाऽप्रख्यातानाम्, अलङ्कारमात्राणामशेषालङ्काराणाम्, प्रतिपादनेन च न तुल्यम्, इति तयोरतितारतम्याद्धेतोः, तद्भावितचेतसा मलङ्कारवासितमनसां ध्वनिवासनापूर्णचेतसां वा संरम्भः स्वपक्षन्यूनताख्यातिजन्मा क्रोधः, अत्रास्मिन् ध्वनिसविशेषनिरूपणलक्षणे ध्वन्याक्षेपलक्षणे वा विषये, युक्त एव । अतः, तेषु ईर्ष्यया कलुषितशेमुषीकत्वमक्षमया दूषितमतित्वम्, कथञ्चित्, नाविष्करणीयं न प्रकाशनीयमित्यर्थः ।

इदमुक्तंभवति—'अल्पविषयत्वाद्ध्वनिर्नास्त्येव, 'सन्नपि क्षोदीयस्तया ज्ञातुमशक्यएव' इति यदुक्तम्, तदुभयमपि ध्वनेर्महाविषयत्वप्रकाशनेन निरस्तम् । अतो महीयसो ध्वनेर्मुष्टिमेयै रलङ्कारैर्भारोवोढुं न पार्यत इत्यस्माभिः काव्ये ध्वनिरेव मूर्धन्यतया ऽवधार्यते । तत्रालङ्कारमात्राभिनिविष्टबुद्धीनामभीष्टसिद्धिव्याघाताद् रोषः समुचित एवेतितत्रास्माभिः क्षमैवविधेया, नतु प्रतिरोषः कार्यः । यद्वा ध्वन्यसदृशालङ्कारसादृश्योपन्यासदर्शनेन ध्वनिभावितचेतसामेव कोपउचित इतितेभ्य आलङ्कारिकैरेव न प्रतिकोपनीयम् ॥

उपसंहरति—

**तदेवं ध्वनेस्तावदभाववादिनः प्रत्युक्ताः ।**

एवमुक्तैः प्रकारैः, तावदादौ, ध्वनेरभाववादिनः, प्रत्युक्ताः प्रत्याख्याताइत्यर्थः । ध्वनिस्थापकप्रमाणाद्युपक्षेपेण तन्मतं निरस्तमितिभावः ।

पर्य्यवसितमुपन्यस्यति—

**अस्ति ध्वनिः ।**

अस्त्येव, नतु विपक्षाक्षेपैरपाकृत इत्याशयः । आचार्यास्तु पूर्ववच्छब्द-तदर्थ-व्यापार-व्यङ्ग्य-समुदाय-रूपं ध्वनिपदप्रतिपाद्यपञ्चकमिहापि व्याचख्युः ॥

द्वितीयोद्द्योतारम्भे ध्वनिप्रभेदनिरूपणस्यासङ्गतिं दवयितुं तद्भेदावुद्दिशति—

**स चासावविवक्षितवाच्यो विवक्षितान्यपरवाच्यश्चेति द्विविधः सामान्येन ।**

सामान्येन, नतु वक्ष्यमाणविशेषैः । अन्यथा द्वैविध्यमेव न स्यात् । ननु भाक्तत्वाक्षेपनिरासानुक्तौ विप्रतिपन्नमतनिराकृतौ सावशेषायां मध्ये ध्वनिप्रकारनिरूपणमसाम्प्रतमितिचेत्, सत्यम्, लक्षणोदाहरणाभ्यां ध्वनौ सामान्यतया निरूपितएव भाक्तत्वाद्याक्षेप-तत्समाधाने सौकर्यं लभेते इति प्रागेव प्रकारनिरूपणं कृतम् ।

उपस्थितिकालेऽन्वयबाधस्य जागरूकतयाऽविवक्षितो वाच्यजात्यादिरूपेणान्वयबोधविषयतयाऽनपेक्षितो वाच्यो यत्र, सोऽविवक्षितवाच्यः प्रथमो लक्षणामूलः, विवक्षितो वाच्यताऽवच्छेदकरूपेणान्वयबोधविषयत्वेनापेक्षितोऽन्यपरो व्यङ्ग्योपसर्जनीभूतो वाच्यो यत्र, स विवक्षितान्यपरवाच्योऽभिधामूलो द्वितीयश्च ध्वनेः प्रकारोऽवगन्तव्यः । तत्र विवक्षितान्यपरवाच्ये ऽभिधामूलतयोपजीव्ये प्राङ्निरूपयितुमर्हेऽपि, सूचीकटाहन्यायेन लक्षणामूलस्याविवक्षितवाच्यस्य ध्वने र्निरूपणमिह विहितम् ॥

अविवक्षितवाच्यध्वनिमुदाहरति—

**तत्राद्यस्योदाहरणम्—**

**सुवर्णपुष्पं पृथिवीं चिन्वन्ति पुरुषास्त्रयः ।**
**शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥**

यः शूरः यः कृतविद्योविद्वान्, यश्च सेवितुं प्रभुं परिचरितुं जानाति । ते त्रयः पुरुषाः, पृथिवीं सुवर्णपुष्पं चिन्वन्तीत्यर्थः । चिञो द्विकर्मकत्वात्पृथिव्या अपि कर्मत्वम् 'सुवर्णपुष्पाम्' इति पाठे सुवर्णमेव पुष्पं यस्या इति बहुव्रीहिः । सुवर्णानि पुष्प्यतीति सुवर्णपुष्पेति विग्रहश्चिन्त्यः, पुष्प्यतेरकर्मकत्वात् । अन्तर्भावितण्यर्थत्वेऽप्यणन्तत्वेन ङीपो दुर्वारत्वात् । अजादिगणपाठकल्पना त्वगतिकगतिः । शूरसूरिसेवनचतुरा एवानायासेन धनं विपुलमुपार्जयन्तीति तात्पर्य्यम् ।

इह पृथिव्याः सुवर्णपुष्पस्य तच्चयनस्य चाप्रसिद्धेः 'सुवर्णपुष्पम्' 'चिन्वन्ति'इति-पदयोर्वाच्यार्थबाधे विपुलधनानायासोपार्जनयो र्लक्षणायास्तत्प्रकर्षः प्राधान्येन व्यज्यत इतिवाच्याविवक्षया वाक्ये ध्वनिप्रथमप्रकारता, दीपकं तुल्ययोगिता वाऽलङ्कारश्च ॥

विवक्षितान्यपरवाच्यध्वनिमुदाहरति—

द्वितीयस्यापि—

उदाहरणमितिशेषः ॥ चाटुकृत्कान्तः प्रेयसीं ब्रूते—

शिखरिणि क्व नु नाम कियच्चिरं किमभिधानमसावकरोत्तपः ।
सुमुखि ! येन तवाधरपाटलं दशति बिम्बफलं शुकशावकः ॥

हेसुमुखि ! असावचिन्त्यभाग्यमहिमा, शुकस्य शावकः शिशुः, क्व नु नाम शिखरिणि कस्मिन् पर्वते, कियच्चिरम्, किमभिधानं किन्नामकम्, तपः अकरोत् । येन तव अधरवत् पाटलं श्वेतरक्तम्, बिम्बस्य तुण्डिकेर्याः फलं दशत्यास्वादयतीत्यर्थः ।

इहशीघ्रसिद्धिदानि श्रीशैलादिप्रदेश—देवशरत्सहस्रसमय—पञ्चाग्निप्रभृतितीव्रतपांसि विना यदा त्वदधरसदृशबिम्बफलस्याप्यास्वादो दुर्लभः, तर्हि का कथा त्वदधरस्येति व्यङ्ग्यं प्रति वाच्यार्थ उपसर्जनीभूत इतिविवक्षितान्यपरवाच्यो ध्वनिः । दंशनमिह निरन्दरास्वादनमात्रम्, नतूदरम्भरिव्यापारः, तावताऽपि तस्य तपोऽतिरेकेण परिणता रसज्ञता,'कामिना मधरास्वादः सुरतादतिरिच्यते' इत्युक्ते, श्चाटुकृतोऽधरास्वादसमीहाच पुनः सूच्यते ।

युष्मच्छब्दस्य समासघटकत्वे स्वातन्त्र्येण दंशनक्रियाऽन्वयिपदार्थोपस्थापकताविरहाद्विच्छित्तिर्विच्छित्तिमापद्येत । तेन वृत्तौ त्वदादेशेच्छन्दोभङ्गप्रसङ्गः स्यादित्येतावन्मात्रं समासाभावहेतुमिह व्याहरन्तो निरस्ताः ।

इत्थंसामान्यनिरूपणानन्तरमापादितपूर्वं ध्वनेर्भाक्तत्वं निराकर्तुमाह—

यदप्युक्तम् 'भक्तिर्ध्वनि रिति, तत्प्रतिसमाधीयते ।

शङ्कायाः प्रतिसमाधानं निराकरणम् । ननु पूर्वं 'भाक्तमाहुस्तमन्ये' इत्यनेन ध्वने र्भाक्तत्वमुक्तम्, नतु भक्तित्वम्, इदानीं पुनरन्यथा कथमनूद्य खण्ड्यत इतिचेत्, उच्यते, व्युत्पत्तिभेदेन ध्वनिशब्दो हि नानाऽर्थकः । तत्र यदा व्यङ्ग्यार्थकः, तदा भक्तेस्तल्लक्षणतोपलक्षणते क्रमेण प्रदर्श्य 'अतिव्याप्तेरथाव्याप्तेः' इत्यादिनाऽनुपदं खण्डयिष्यते । यदा पुनर्ध्वननव्यापारार्थकः, तदा यद्भक्तितादात्म्यमापादितम्, तदेतत्खण्ड्यते। तदाचार्यैरप्युक्तम्—'भक्तिश्च ध्वनिश्चेतिताद्रूप्यं लक्षणमुपलक्षणमिति त्रिविधमपि मतं दूषयति । किं पर्यायवत्ताद्रूप्यम्, अथ पृथिवीत्वमिव

पृथिव्या अन्यतोव्यावर्तकधर्मरूपतया लक्षणम् , उत काक इव देवदत्तगृहस्य सम्भवमात्राद्युपलक्षणम्' इति ॥

तत्र ताद्रूप्यं खण्डयति—

**भक्त्या बिभर्ति नैकत्वं रूपभेदादयं ध्वनिः।**

विवृणोति वृत्तिकृत्—

**अयमुक्तप्रकारो ध्वनिर्भक्त्या नैकत्वं विभर्ति ।**

उक्तप्रकारोऽयं ध्वनिर्भक्त्या भक्तेरेकत्वं ताद्रूप्यं, भक्त्या सह वा ताद्रूप्यं न विभर्ति 'वृद्धोयूना' इत्यादिनिर्देशात्सहशब्दाप्रयोगेऽपि तृतीया । तत्र हेतुमाह—

**भिन्नरूपत्वात् ।**

रूपभेद एव हि घटादीनां पटादिभ्यो भेदकइत्याकूतम् ॥

तमेव रूपभेदं दर्शयितुमादौध्वनेः स्वरूपमनुवदति—

**वाच्यवाचकव्यतिरिक्तस्यार्थस्य वाच्यवाचकाभ्यां तात्पर्येण प्रकाशनं यत्र व्यङ्ग्यप्राधान्ये, स ध्वनिः ।**

व्यतिरिक्तस्य भिन्नस्य । अर्थस्य व्यङ्ग्यस्य । तात्पर्येणप्रयोजनत्वेन बुबोधयिषया । प्रकाशनं व्यञ्जनयाद्योतनम् । अन्यत्स्फुटम् । 'अर्थप्रकाशन' मितिपाठस्त्वर्थशब्दस्य द्विरुपादानादन्वयानुपपत्त्याऽनुपपन्नः ॥

ततो भक्तेः स्वरूपं दर्शयति—

**उपचारमात्रं तु भक्तिः ।**

उपचारः शक्यताऽवच्छेदकप्रकारकआरोपो लक्षणा गुणवृत्ति रितियावत् । तुना ध्वनेर्भेदः, मात्रशब्देन लक्षणाप्रयोजनीभूतव्यङ्ग्यस्याप्राधान्यं च सूच्यते ।

यद्यप्युपचारशब्देनाग्रे सादृश्यसम्बन्धमूलिकैव गुणवृत्ति र्ग्रहीष्यते । अन्यत्रापि 'उपचारो नामात्यन्तविशकलितयोः पदार्थयोः सादृश्यातिशयमहिम्ना भेदप्रतीतिस्थगनम्' इत्यनेन गौणलक्षणैवोक्ता । तथापि खण्डनप्रकरणानुरोधेन लक्षणासामान्यपरतयैव तद्व्याख्यानं बोध्यम् । अनेन भक्ते र्व्यङ्ग्यव्यञ्जना तादात्म्यंखण्डितम् , व्यञ्जना तादात्म्यन्तु विस्तरेण तृतीयोद्द्योतेऽपि खण्डयिष्यते ॥

ननु भक्ते स्ताद्रूप्यासम्भवे तल्लक्षणत्वमेव स्वीक्रियेतेतिद्वितीयं विकल्पं निराकर्तुं कारिकामवतारयति—

मा चैतत् स्याद्भक्तिर्लक्षणं ध्वने रित्याह—

**अतिव्याप्ते रथाव्याप्ते र्न चासौ लक्ष्यते तया ॥ १७ ॥**

अतिव्याप्ते रव्याप्तेश्च दोषात् , तयाभक्त्या, असौध्वनि र्न लक्ष्यत इत्यर्थः ॥

क्रमेण विवृणोति वृत्तिकृत्—

न च भक्त्या ध्वनिर्लक्ष्यते ।

प्रतिज्ञानिर्देशोऽयम् ॥

तत्रहेतुं पृच्छति—

कथम् ॥

उत्तरयति—

अतिव्याप्ते रव्याप्तेश्च ॥

उद्देशानुसारं पूर्वमतिव्याप्तिं दर्शयति—

तत्रातिव्याप्तिः, ध्वनिव्यतिरिक्तेऽपि विषये भक्तेः सम्भवात् ।

तत्र तयोर्मध्ये अतिर्व्याप्तिर्लक्षणस्य लक्ष्यताऽवच्छेदकसामानाधिकरण्यविशिष्ट—लक्ष्यताऽवच्छेदकावच्छिन्नप्रतियोगिताकभेदसामानाधिकरण्यम् । साच ध्वन्यविषये वक्ष्यमाणलक्ष्ये ध्वनिलक्षणतयाऽभिमताया भक्तेः सम्भवात्समन्वयाद्बोध्या ॥

तामेवोपपादयति—

यत्र हि व्यङ्ग्यकृतं महत्सौष्ठवं नास्ति, तत्राप्युपचरितशब्दवृत्त्या प्रसिद्ध्यनुरोधप्रवर्तितव्यवहाराः कवयो दृश्यन्ते ।

हि यतः, यत्र येषु वक्ष्यमाणभक्त्युदाहरणेषु, व्यङ्ग्यकृतं, महत् सौष्ठवं चारुत्वं, नास्ति । तत्रापि, उपचरिताऽऽरोपिता या शब्दवृत्तिर्लक्षणा, तया, प्रसिद्धेरूढेः, अनुरोधेन, प्रवर्तितो व्यवहारश्शब्दप्रयोगरूपव्यापारो यै, स्तादृशाः, कवयो दृश्यन्ते, तस्माद्भक्ति र्न ध्वनेर्लक्षण मित्यन्वयः ।

इदमुक्तम्भवति—

'नान्ध्रीपयोधर इवातितरां प्रकाशो, नो गुर्जरीस्तन इवातितरां निगूढः ॥
अर्थो गिरामपिहितः पिहितश्च शश्वत् , सौभाग्यमेति मरहट्टवधूकुचाभः ॥'

इत्यभियुक्तोक्ते रीषद्गूढस्यैव व्यङ्ग्यस्य चारुतानिर्धारणेऽपि चमत्कारिणं व्यङ्ग्यं व्यङ्ग्यसामान्यं वाऽनपेक्ष्य रूढिमात्रमनुरुन्धानैः कविभिः प्रयुज्यमानेषु 'कलि-

ङ्गःसाहसिकः' 'श्वेतो धावति' 'मञ्चाः क्रोशन्ति' इत्यादिषु ध्वनेरलक्ष्येष्वपि गुणवृत्ते रुपलम्भादतिव्याप्तेः जागरूकतया नैव गुणवृत्तिः कदाचन ध्वनेर्लक्षणम् ॥

अथभक्त्युदाहरणानि स्वपक्षं द्रढयितुं दर्शयति—

यथा—'परिम्लानं पीनस्तनजघनसङ्गादुभयत-
स्तनो र्मध्यस्यान्तः परिमलनमप्राप्यहरितम् ।
इदं व्यस्तन्यासं श्लथभुजलताऽऽक्षेपवलनैः,
कृशाङ्ग्याः सन्तापं वदति बिसिनीपत्त्रशयनम् ॥'

कृशाङ्ग्या वियोगव्यलीकेन तनुगात्र्याः, पीनस्य पीवरस्य, स्तनजघनस्य कुचयोः श्रोणिपुरोभागस्यच, सङ्गात् सम्पर्कात्, उभयत ऊर्ध्वमधश्च स्थानद्वये, परिम्लानं तदीयतापभाराभ्यामतिम्लानम्, तथा तनोः कृशस्य, मध्यस्यावलग्नस्य परिमलनं धारणं गाढसम्बन्धमितियावत्, अन्तर्मध्ये, अप्राप्य, हरितं पालाशवर्णम्, तथा श्लथयोः सन्तापातिशयेन शिथिलयोः, भुजलतयोः, आक्षेपाणां वेदनाधिक्यादितस्ततो न्यासानां, वलनैर्विधानैः, व्यस्तोविपर्यस्तो न्यासोरचना यस्य, तत्, इदं पुरोवर्त्ति, बिसिनीपत्त्रशयनं नलिनीदलतल्पम्, ( तस्याः )सन्तापं वदति स्फुटीकरोतीत्यर्थः ।

इह धारणार्थकान्मलधातोर्ल्युटिमलनमिति । मिलतेः कुटादित्वाभावान्मिलनमितिपाठस्त्वसङ्गतः । तल्पस्य व्यक्तवागुच्चारणकर्तृत्वासम्भवाद्वदतेः स्फुटीकरणे लक्षणा । सा च प्रयोजनविरहाद् रूढिमूलिकैव । प्रयोजनस्य कथञ्चित्कल्पनेऽप्यचमत्कारितया न ध्वनिः, किन्तु भक्तिरेवेति न तयो र्लक्ष्यलक्षणभावः । एवमेवोदाहरणान्तरेष्वपि बोध्यम् ॥

द्वितीयमुदाहरणं दर्शयति—

तथा—'चुम्बिज्जइ सअहुत्तं अवरुन्धिज्जइ सहस्सहुत्तम्मि ।
विरमिअ पुणो रमिज्जइ पिओ जणो णत्थि पुनरुत्तम् ॥'

'चुम्ब्यते शतकृत्वोऽवरुध्यते सहस्रकृत्वः ॥
विरम्य पुनारम्यते प्रियोजनो नास्ति पुनरुक्तम् ॥' इतिच्छाया ।

प्रियोजनः, शतकृत्वः शतं वारान्, प्रियेण जनेन, चुम्ब्यते, सहस्रकृत्वोऽवरुध्यतउपगूह्यते, विरम्य विश्रम्य, पुनः सुरतानन्तरमपि, रम्यते । ( तत्र ) पुनरुक्तं पिष्टपेषणवत्कृतकरणं नास्तीत्यर्थः । शब्दस्यैवोक्तिकर्मत्वाच् चुम्बनादिक्रि-

यासु पुनरुक्तत्वासम्भवात्पुनरुक्तपदस्य पुन॰कृते लक्षणा ॥

तृतीयमुदाहरणं दर्शयति—

तथा—'कुविआओ पसन्नाओ ओरण्णमुहीओ विहसमाणाओ ।
जह गहिओ तह हिअअं हरन्ति उच्छिन्तमहिलाओ ॥'

'कुपिताः प्रसन्ना अवरुदितमुख्यो विहसन्त्यः ॥
यथा गृहीतास्तथा हृदयं हरन्ति स्वैरिण्यो महिलाः ॥' इतिच्छाया ।

स्वैरिण्यः पुंश्चल्यो महिलाः कुपिताः क्रुद्धाः, प्रसन्ना हृष्टाः अवरुदितमुख्यः सरुदितवदनाः, यथा कुपितत्वादिना येनप्रकारेण, गृहीताज्ञाता विलोकिता इतियावत्, तथा हृदयं विलोकयितुर्मनः हरन्ति वशीकुर्वन्तीत्यर्थः ।

इह हरते र्वशीकृतौ भक्ति र्मनसो मूर्त्त्यभावेन हरणकर्मत्वासम्भवात् । यत्तुकश्चिदाह—'ग्रहणेनोपादानं लक्ष्यते' इति, तन्न, गृह्णातेरुपादानेऽभिधाया एव सत्त्वात्, उपादानरूपार्थस्यात्राविवक्षितत्वाच्च ॥

चतुर्थमुदाहरणं दर्शयति—

तथा—'अज्जाएँ पहारो णवलदाए दिण्णो पिएण थणवट्टे ॥
मिउओ वि दूसहो व्विअ जाओ हिअए सवत्तीणम् ॥'

'कनिष्ठभार्यायाः प्रहारो नवलतया दत्तः प्रियेणस्तनपृष्ठे ।
मृदुकोऽपि दुस्सहइव जातो हृदये सपत्नीनाम् ॥' इतिच्छाया ॥

कनिष्ठा चासौ भार्या कनिष्ठभार्या, तस्या यवीय॰पत्न्याः, स्तनपृष्ठे कुचोपरि, प्रियेण, नवलतया, मृदुकोऽप्यल्पतया सुसहोऽपि, दत्तो विहितः, प्रहार आघातः, सपत्नीनां हृदये दुस्सहइव जातइत्यर्थः ।

इह कनिष्ठत्वं वयसैव विवक्षितं नतु प्रेम्णा । यवीयस्यां प्रेमप्रकर्षसूचकतया प्रहारस्य सपत्नीहृदयदुस्सहत्वम् । स्वसत्त्वनिवृत्तिपूर्वक–परसत्त्वोत्पत्त्यनुकूलव्यापारस्य ददाते र्मुख्यार्थस्य बाधितत्वाद् विधानेलक्षणा । व्यङ्ग्यार्थादपि विभावना–विशेषोक्तिसङ्करासङ्गत्युत्प्रेक्षाणां वाच्यालङ्काराणामेव चमत्कारितया प्राधान्यम् ॥

पञ्चममुदाहरणमाह—

तथा—'परार्थे यः पीडा मनुभवति भङ्गेऽपि मधुरो,
यदीयः सर्वेषामिह खलु विकारोऽप्यभिमतः ।
न सम्प्राप्तो वृद्धिं यदि स भृशमक्षेत्रपतितः,

किमित्तो दोषोऽयं न पुनरगुणाया मरुभुवः ॥

यो भङ्गे खण्डने पराभवेऽपि च मधुरो माधुर्यगुणभाग्रम्यशीलश्च, परार्थे परेषां प्रयोजन उपकारे च, पीडां यन्त्रनिष्पीडनं क्लेशं च, अनुभवति लभते प्रत्यक्षीकरोति च । यदीयो विकारो वैकृतं गुडादि हानिश्च, इहखलु सर्वेषामभिमतः प्रियो भवति । स इक्षुः सज्जनश्च, अक्षेत्र ऊषरकेदारे कुस्थाने च, पतितः प्राप्तः, यदि वृद्धिं पुष्टिमुन्नतिञ्च न सम्प्राप्तः, तर्हि, असौ किम् ? इक्षोः सज्जनस्यच दोषः अगुणायागुणशून्यायाः, मरुभुवो दुरास्पदस्य च पुन र्न दोषः, अपितु तदीयएव दोष इत्यर्थः ।

अत्राप्रस्तुतेक्षुप्रशंसामनुबध्नता कविना प्रस्तुतसज्जनवुबोधयिषयोपात्तस्यानुभवस्य जड इक्षावन्वयबाधाल्लाभे वहने वाऽनुभवते र्लक्षणा ॥

तदाह—

इत्यत्रेक्षुपक्षेऽनुभवतिशब्दः ।

लाक्षणिक इतिशेषः ।

नन्वेतादृशस्थले सप्रयोजनाया अपि लक्षणायाः सम्भवाद्व्यङ्ग्यसद्भावा न्न कथं ध्वनिरित्यतोऽभिधत्ते—

न चैवंविधः कदाचिदपि ध्वनेर्विषयोऽभिमतः ।

तत्र हेतुमाह—

यतः—

**उक्त्यन्तरेणाशक्यं यत् तच्चारुत्वं प्रकाशयन् ।**
**शब्दो व्यञ्जकतां बिभ्रद् ध्वन्युक्ते र्विषयी भवेत् ॥ १८ ॥**

यच्चारुत्वं चमत्कारः, उक्त्यन्तरेण ध्वन्यतिरिक्तशब्देन, अशक्यं प्रकाशयितुमितिशेषः । तच्चारुत्वं प्रकाशयन् , शब्दः शब्दनाख्यव्यापारभाक् पूर्वोक्तः शब्दादिः ध्वन्युक्ते र्विषयीभवेद् ध्वनिशब्दवाच्यः स्यादित्यर्थः ।

कारिकार्थं प्रकृत उपयोजयति—

अत्र चोदाहृते विषये नोक्त्यन्तराशक्यचारुत्वव्यक्तिहेतुः शब्दः ।

यत उक्तोदाहरणघटका वदतीत्यादिशब्दा अगूढत्वादनादरणीयं व्यङ्ग्यं तादृशमेव प्रकाशयन्ति, यादृशं तद्वाक्यघटकोऽपरोऽपि शब्दः प्रकाशयितुं शक्नुयात्,

अतो व्यङ्ग्यस्य तत्र चारिमप्रकर्षाभावान्न ध्वनिविषयतेत्याशयः ॥

एवं सप्रयोजनलक्षणास्थलाद्ध्वनिं निरस्य, रूढिहेतुकलक्षणास्थलादपि निरसितुमाचष्टे—

किञ्च—

**रूढा ये विषयेऽन्यत्र शब्दाः स्वविषयादपि ।**
**लावण्याद्याः प्रयुक्तास्ते न भवन्ति पदं ध्वनेः ॥ १९ ॥**

ये लावण्याद्या लावण्य–सब्रह्मचारि–सोदर–प्रभृतयः शब्दाः, स्वविषयादात्मवाच्यार्थोल्लवणभाव–समानशाखाऽध्यायि–समानोदरकादिरूपाद् , अन्यत्रान्यस्मिन्, द्युतिविशेषतुल्यादिरूपे विषयेऽर्थेलक्ष्ये रूढाः प्रसिद्धाः प्रयुक्ताः, ते ध्वनेः पदमाश्रयो न भवन्तीत्यर्थः ।

ध्वनिपदमिह चमत्कारातिशयशालिव्यङ्ग्यपरम् । तद्विरहादेवध्वनित्वाभावः । नन्वेवम् 'लावण्यकान्तिपरिपूरिंतदिङ्मुखेऽस्मिन्, स्मेरेऽधुना तवमुखे तरलायताक्षि !
क्षोभं यदेति न मनागपि तेन मन्ये, सुव्यक्तमेव जलराशिरयं पयोधिः ॥'
इत्यादौ लावण्यशब्दप्रयोगसद्भावाद्रूपकध्वनि र्न स्यादित्यत आह—

**तथाविधे च विषये क्वचित् सम्भवन्नपि ध्वनिव्यवहारः प्रकारान्तरेण प्रवर्तते, न तु तथाविधशब्दमुखेन ।**

क्वचिदुक्तपद्यादौ, तथाविधे लावण्यादिशब्दभाजि, विषये स्थले, सम्भवन्नपि ध्वनिव्यवहारो रूपकादिध्वनिव्यपदेशः, प्रकारान्तरेण रूपकव्यञ्जकवाच्यमहिम्ना प्रवर्त्तते, न तु तथाविधशब्दमुखेन लावण्यादिशब्दद्वारेणेत्यर्थः ।

अन्वयव्यतिरेकविरहाल्लावण्यादिलाक्षणिकशब्दप्रयोज्यो न ध्वनि व्यपदेश इति सारम् ॥

लक्षणासामग्रीविरहादपि गुणवृत्तिर्व्यङ्ग्यमवगमयितुं न प्रभवतीत्याह—

अपिच—

**मुख्यां वृत्तिं परित्यज्य गुणवृत्त्याऽर्थदर्शनम् ॥**
**यदुद्दिश्य फलं, तत्र शब्दोनैव स्खलद्गतिः ॥ २० ॥**

यद्व्यङ्ग्यं, फलंप्रयोजनम्, उद्दिश्याभिप्रेत्यबोधयितुमितिशेषः, मुख्यामभिधां-

वृत्तिं परित्यज्य विहाय परिसमाप्यवा, गुणवृत्त्या लक्षणया, अर्थस्यलक्ष्यस्य, दर्शनं प्रकाशनं विधीयते । तत्र प्रयोजने बोधनीये शब्दः स्खलद्गति र्बोधनासमर्थो नैवेत्यर्थः ।

तदाह वृत्तिकृत्—

तत्रहि चारुत्वातिशयविशिष्टार्थप्रकाशनलक्षणे प्रयोजने कर्तव्ये, यदि शब्दस्यामुख्यता, तदा तस्य प्रयोगे दुष्टतैव स्यात् ।

तत्र चारुत्वातिशयविशिष्टस्य व्यङ्ग्यस्यार्थस्य, प्रकाशनलक्षणे बोधजननरूपे प्रयोजने कार्ये, यदि शब्दस्य, अमुख्यता गौणता बाधितार्थत्वमिति यावत्, स्यात्, तदा तस्य शब्दस्य प्रयोगे दुष्टतैव दोषएव स्यादित्यर्थः ॥

वक्तव्यमभिधत्ते—

नचैवम् । तस्मात् ।

एवं व्यङ्ग्यार्थे बोधनीये मुख्यार्थबाधो यतो नैव भवति । तस्मात्सामग्रीविरहा-ल्लक्षणा नैव ध्वनेर्लक्षणमित्यर्थः ।

वाच्यार्थबाधो वाच्यार्थसम्बन्धो रूढिप्रयोजनान्यतरच्चेतित्रितयस्य—

'मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् ।

अन्योऽर्थो लक्ष्यते यत्सा लक्षणाऽऽरोपिता क्रिया ॥'

इतिमम्मटेन कारणत्वे निर्धारिते, 'गङ्गायां घोषः' इत्यादौ लक्ष्ये तीरएव बोधनीये वाच्यान्वयबाधः, नतु शैत्यातिशयलक्षणे व्यङ्ग्ये प्रयोजने बोधनीये । तस्मात् प्रयोजनवुबोधयिषाया मुक्तसामग्रीविरहान्न लक्षणा प्रसरतीति ध्वनिः कुतो लक्षणया लक्ष्येतेत्याकूतम् ॥

भक्तेर्ध्वनिलक्षणत्वं पुनरन्यथा खण्डयति—

**वाचकत्वाश्रयेणैव गुणवृत्तिर्व्यवस्थिता ।**

**व्यञ्जकत्वैकमूलस्य ध्वनेः स्याल्लक्षणं कथम् ॥ २१ ॥**

वाचकत्वाश्रयेणैव व्यवस्थिताऽभिधापुच्छभूतत्वात्तामेवावलम्ब्योदिता गुणवृत्तिर्ल-क्षणा, व्यञ्जकत्वैकमूलस्य व्यञ्जनामात्रगम्यस्य ध्वने र्लक्षणं बोधकारणं कथंस्यादित्यर्थः।

व्यञ्जनैव व्यङ्ग्यं बोधयितुमीष्टे, नतु लक्षणा, सातु स्वयमेवाभिधाऽऽश्रितत्वा-दस्वतन्त्रेत्यभिप्रायः । तथाचोक्तम्—'अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते' इति ॥

पर्यवसितमाह—

तस्मादन्यो ध्वनि, रन्या च गुणवृत्तिः ।

तस्मात्स्वरूपसामग्रीकार्यादिभेदाद्ध्वने र्भक्त्या भेद इत्यर्थः ॥

भक्तेर्ध्वनिलक्षणत्वं निरस्यन्नेवमतिव्याप्तिं प्रदर्श्याव्याप्तिं प्रदर्शयति—

अव्याप्तिरप्यस्य लक्षणस्य ।

भक्तेर्ध्वनिलक्षणत्वे 'लक्ष्यताऽवच्छेदकसामानाधिकरण्यविशिष्ट–लक्ष्यताऽवच्छेदकसमानाधिकरणात्यन्ताभावप्रतियोगित्वरूपा' ऽव्याप्तिरप्यापद्येत । अपिरतिव्याप्तिमपि सङ्गृह्णाति । तामेवोपपादयति—

नहि ध्वनिप्रभेदो विवक्षितान्यपरवाच्यलक्षणः अन्ये च बहवस्तद्भेदप्रकारा भक्त्या व्याप्यन्ते ।

सन्दर्भशुद्धेरभावेऽपि कथञ्चिद्व्याख्यायते ध्वने र्विवक्षितान्यपरवाच्यलक्षणः प्रकारः, अन्ये च बहवस्तद्भेदप्रकारा असंलक्ष्यक्रमभेदाप्रभेदा रसभावादिध्वनयः, नहि भक्त्या व्याप्यन्त इत्यन्वयः ।

भक्तिर्नाम ध्वनेर्लक्षणं तदा स्यात्, यदि सर्वत्र ध्वनिभेदेषु भक्तिस्तिष्ठेत् । तदेव तु नास्ति, तथाहि–केवलमविवक्षितवाच्ये ध्वनिभेदे वाच्याविवक्षया भक्तेः सञ्चारेऽपि, विवक्षितान्यपरवाच्यादावसम्भवादव्याप्तिः स्फुटैवेत्यभिसन्धिः ॥

अनुगमयति—

तस्माद्भक्तिरलक्षणम् ।

तस्मादतिव्याप्त्यव्याप्तिदोषापाताद्भक्तिर्ध्वनेः, अलक्षणम् । लक्षणं नेतीत्युचितम्, प्रसज्यप्रतिषेधीयनञ एव क्रियान्वयिप्रधानाभावबोधकत्वनियमात्, समासे पर्युदासत्वसम्भवाच्च । तदुक्तम्—

'अप्रधान्यं विधेर्यत्र प्रतिषेधे प्रधानता ।
प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ् ॥'
'प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता ।
पर्युदासः सविज्ञेयो यत्रोत्तरपदेन नञ् ॥' इति ॥

इदानीं भक्तेर्ध्वनितादात्म्यलक्षणत्वे निरस्य, तदुपलक्षणत्वमपि निरसितुं सम्भावयति—

## कस्यचिद्ध्वनिभेदस्य सा तु स्यादुपलक्षणम् ।

कस्यचिदविवक्षितवाच्यस्य ( नतु सर्वस्य ) ध्वनिभेदस्य, उपलक्षणं काकइव-देवदत्तमन्दिरस्य कादाचित्कबोधकारणं, तु सा गुणवृत्तिः, स्यात् सम्भाव्येतेत्यर्थः ॥

विवृणोति वृत्तिकृत्—

सा पुनर्भक्ति र्वक्ष्यमाणप्रभेदमध्यादन्यतमस्य भेदस्य यदिनामोपलक्षणतया सम्भाव्येत ।

तदाऽपि न ध्वनिपक्षावलम्बिनां काचनक्षतिरितियोजनीयम् । यदि नाम भक्ति-रविवक्षितवाच्यरूपध्वनिभेदस्य बोधं जनयेत्, तर्हि जनयतु, न तावता भक्तिः कृतार्था, व्यञ्जना वा गतार्था, भक्तेस्तदितरभेदबोधजनकत्वाभावादित्याशयः ॥

ननूपलक्षणात्मकभक्तिद्वारेणैव सर्वेषां ध्वनिप्रकाराणामवगमः स्यात्, किन्तल्लक्षण-विधानेनेत्याक्षेपं क्षपयति—

**यदि च गुणवृत्त्यैव ध्वनिर्लक्ष्यत इत्युच्यते, तदभिधाव्यापारेणैव तदितरोऽलङ्कारवर्गः समग्र एव लक्ष्यत इति प्रत्येकमलङ्काराणां लक्षणक-रणे वैयर्थ्यप्रसङ्गः ।**

असुसङ्गतोऽपि सन्दर्भः कथञ्चिद्व्याख्यायते । प्राचीनमतश्रद्धाजाड्येन भक्तिर्यदि ध्वनिलक्षणं स्वीक्रियते, तदाऽपि न निर्वाहः । नैव सा सर्वान्ध्वनीनवगमयितुमीष्टे, न वा व्यञ्जनाकार्यभारं वोढुम् । इतरथाऽलङ्कारसामान्यवाचकपदादेवाभिधया सर्वेषा मलङ्कारत्वसामान्येनावगमे जाते, तत्तदलङ्कारविशेषाणामपि लक्षणविधानमेवमेव वृथा स्यात् । सामान्यतयाऽवगतस्यापि विशेषेणावगमाय लक्षणं विधीयते । नहि प्रमेयत्वेनावगतं घटं घटत्वेनावगमयितुं कम्बुग्रीवादिमत्वात्मकं तल्लक्षणं न कुर्व-न्ति । तस्माद्भक्तिर्न ध्वनिरूपा, नवा ध्वनेर्लक्षणम्, नच वोपलक्षणमित्याकूतम् । परमार्थतस्त्वविवक्षितवाच्येऽपि ध्वनौ भक्त्यालक्ष्यार्थ एव बोध्यते, नतु प्रयोजनी-भूतप्रतीतिगोचरो व्यङ्ग्यार्थः—

'यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते ।
फले शब्दैकगम्येऽत्र व्यञ्जनान्नापराक्रिया ॥" इतिमम्मटोक्तेः ॥

'तुष्यतु दुर्जनः' इति न्यायेन भक्ते र्ध्वनिलक्षणत्व मभ्युपगत्यापि ध्वनिपक्षं-द्रढयति—

**लक्षणेऽन्यैः कृते चास्य पक्षसंसिद्धिरेव नः ॥ २२ ॥**

अन्यैःप्राचीनैर्भक्तिवादिभिः, अस्यध्वनेः, लक्षणे कृते च, नोऽस्माकं ध्वनिवादि-नामेव, नतु तेषाम्, पक्षस्य साधनीयार्थस्य सम्यगनायासेन सिद्धि र्निष्पत्तिरित्यर्थः ॥

तदाह वृत्तिकारः—

**कृतेऽपि वा पूर्वमेवान्यै र्ध्वनिलक्षणे पक्षसंसिद्धिरेव नः ।**

यदि भक्तिरेव ध्वनेर्लक्षणम्, सा च प्राचीनैरेव व्याकृतेत्युच्यते, तदाऽपि ध्वनि-वादिनामस्माकमेवेष्टसिद्धि रित्यभिसन्धिः ॥

कुत इत्यत आह—

**यस्माद्ध्वनिरस्तीति नः पक्षः । स च प्रागेव संसिद्ध इत्ययत्नसम्पन्नसमीहितार्थाः सम्पन्नाः स्मः ।**

यतो ध्वनेः सत्त्वमेवास्माकं साधनीयम् । तच्च यद्यस्मत्प्रयासात्पूर्वत एव संसिद्धमस्ति, तर्हि प्रयत्नं विनैव सिद्धेष्टार्था वयमभूमेत्यस्माकं महाँल्लाभ इतिसारम् ॥

निरस्तचरीमपि ध्वनेरनिर्वचनीयतामनूद्य निगदेन खण्डयति—

**येऽपि सहृदयहृदयसंवेद्य मनाख्येयमेव ध्वने रात्मानमाम्नासिषुः । तेऽपि न परीक्ष्यवादिनः, यत उक्तया नीत्या वक्ष्यमाणया च ध्वनेः सामान्यविशेषलक्षणे प्रतिपादितेऽपि, यद्यनाख्येयत्वम्, तत्सर्वेषामेव वस्तूनां तत्प्रसक्तम् ।**

ये पराक्षेपप्रतिक्षेपाक्षमतया ध्वनिलक्षणकरणाद्विमुखा ध्वनेस्तत्त्वंस्वरूपम्, अनाख्येयमनिर्वचनीयम्, सहृदयहृदयसंवेद्यं तत्प्रतीतिगोचरमात्रम्, आम्नासिषु रवोचन् । तेऽपि न परीक्ष्य वादिनो विविच्यवक्तारः सन्तीतिशेषः, यतः 'यत्रार्थः शब्दो वा' इत्यादिनोक्तया, 'अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम्' इत्यादिना वक्ष्यमाणया च नीत्या न्यायेन रीत्येतियावत्, ध्वनेः सामान्यलक्षणे विशेषलक्षणे च प्रतिपादिते कथितेऽपि, यद्यनाख्येयत्वमेव तस्य, तदा सर्वेषां कृतलक्षणानां वस्तूनां पदार्थानां, तदनाख्येयत्वं प्रसक्तमापन्नमित्यर्थः ।

निरुक्तावप्यनिर्वचनीयत्वंध्वने दुर्वदमिति तदनिर्वचनीयतावादोऽपि वचनीयतागोचरएवेत्यभिप्रायः ॥

अनिर्वाच्यतावादिनोऽपि स्वनये प्रवेशयन्नुद्द्योतमुपसंहरति—

**यदि पुनर्ध्वनेरतिशयोक्त्याऽनया, काव्यान्तरातिशायि स्वरूपमाख्यायते, तत्तेऽपि युक्ताभिधायिन एव ॥**

**इति राजानकानन्दवर्धनाचार्यविरचिते ध्वन्यालोके**
**प्रथम उद्द्योतः ॥**

---

यदितु—प्रियप्राया वृत्ति र्विनयमधुरो वाचि नियमः ।
प्रकृत्या कल्याणी मति रनवगीतः परिचयः ॥
पुरो वा पश्चाद्वा तदिदमविपर्यासितरसम्, इत्यनेन साधूनां चरित्रस्वभावे

निरुक्तेऽपि—'चरित्रं साधूनां किमपि निरवद्यं विजयते' इति किमपीत्यनेन पुनस्त-दनाख्येयतोक्ता यथा कमप्यतिशयं बोधयति, तथैव ध्वनेरनाख्येयतेयं काव्यान्त-रातिशायि गुणीभूतव्यङ्ग्यचित्रकाव्यापेक्षया विच्छित्तिविशेषाधानेन विलक्षणं, स्वरू-पमाख्याति । तत्रैव चानाख्येयत्ववादिनान्तात्पर्य्यम्, नत्वनाख्येयत्वमुखेन ध्वनेर-भावे, तत्तदा, तेऽनिर्वचनीयतावादिनोऽपि, युक्ताभिधायिन उचितवादिन एव, सर्व-थासिद्धध्वनिसिद्धान्तस्वीकारादिति दिक् ॥

अभ्यस्तस्खलिता दृष्टि र्लङ्घनीया घनाटवी ।
राधिकाकृष्णकारुण्यं शरणं मम केवलम् ॥

इति मैथिलश्रोत्रियाग्रजन्मश्रीवदरीनाथशर्मनिर्मितायां ध्वन्यालोकदीधितौ
प्रथम उद्द्योतः ॥

---

## अथ ध्वन्यालोकदीधितौ द्वितीय उद्द्योतः ।

कृष्णालकप्रतिच्छाय—लाञ्छिताः सन्ततश्रियः ।
ममान्तरं तमो घ्नन्तु, राधापदनखेन्दवः ॥

अथ प्रथमोद्द्योते सपरिकरं सामान्यभेदद्वयप्रदर्शनपुरस्सरं ध्वनिंनिरूप्य, विशेषजिज्ञासानिवृत्तये तद्विशेषभेदान्निरूपयितुं द्वितीयमुद्द्योतमुपक्रममाणो विवरण-कारः कारिकाऽवतरणमुपन्यस्यति—

## अथ ध्वन्यालोके द्वितीय उद्द्योतः ।

एवमविवक्षितवाच्य–विवक्षितान्यपरवाच्यत्वे[ न ] ध्वनिर्द्विप्रका-रः प्रकाशितः । तत्राविवक्षितवाच्यस्य प्रभेदप्रतिपादनायेदमुच्यते—

स्पष्टम् ।

**अर्थान्तरे संक्रमित मत्यन्तं वा तिरस्कृतम् ॥**
**अविवक्षितवाच्यस्य ध्वनेर्वाच्यं द्विधा मतम् ॥ २३ ॥**

अर्थान्तरे वाच्यभिन्ने व्यङ्ग्येऽर्थे संक्रमितं सङ्गमितं विशेषणीकृतमितियावत्, वा तथा, अत्यन्तं सर्वथा तिरस्कृतमयोग्यतयाऽनुपात्तमिति द्विधा द्विप्रकारकम्, अविवक्षितवाच्यस्य ध्वनेर्वाच्यं मतमित्यर्थः । वाच्यमिति सामान्ये नपुंसकम् ।

व्यङ्ग्यप्रकारनिरूपणप्रस्तावे वाच्यभेदनिरूपणस्यासङ्गतिमाशङ्कितां समादधाति—

**तथाविधाभ्यां च ताभ्यां व्यङ्ग्यस्यैव विशेष इति व्यङ्ग्यप्रकाशनपरस्य ध्वनेरेवायं प्रकारः ।**

तथाविधाभ्यामर्थान्तरसंक्रमितात्यन्ततिरस्कृताभ्यां, ताभ्यां वाच्याभ्यां, व्यङ्ग्यस्यैव नतु वाच्यस्य विशेषो वैलक्षण्यं भेद इतियावत्, इतिहेतोः, व्यङ्ग्यप्रकाशनपरस्य प्रधानीभूतव्यङ्ग्यव्यञ्जकस्य ध्वनेरेवायं प्रकारो न तु गुणीभूतव्यङ्ग्यादेरित्यर्थः । व्यङ्ग्यभेदनिरूपणोपयोगि वाच्यभेदनिरूपणमिह प्रासङ्गिकं नासङ्गतमितिसारम् ।

अविवक्षितवाच्यध्वनेराद्यं भेदमुदाहर्तुमाह—

**तत्रार्थान्तरसंक्रमितवाच्यो यथा—**

वैदेहीविरहव्यग्रो रामो व्याहरति—

**स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना,**
**वाताः शीकरिणः पयोदसुहृदा मानन्दकेकाः कलाः ।**
**कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे,**
**वैदेही तु कथं भविष्यति हहा हा देवि ! धीरा भव ॥'**

स्निग्धामसृणा श्यामला नीलाच या कान्तिस्तया लिप्तमाच्छादितं वियद्गगनं यैस्तादृशाः, तथा वेल्लन्त्यः प्रमदभरेण सविलासंस्फुरन्त्यो वलाका वकपंक्तयो येषु तादृशाघना मेघाः, तथा शीकरिणो वृष्टिसम्पर्केण जललवभृतो वाता वायवः, तथा पयोदःसुहृद्येषां ते, पयोदसुहृदस्तेषां, यद्वा पयोदस्यमेघस्य सुहृदां मित्राणां, केकाशब्दसमासत्त्या केकिनाम्, कला अस्फुटमधुराः, आनन्दकेकाः प्रमोदजमयूरध्वनयः कामं यथेच्छं, सन्तु समुज्जृम्भन्ताम् ( ततो मे नभीतिरितिभावः ) दृढमत्यन्तं, कठोरहृदयः कर्कशमनाः, रामो दाशरथिदुःखसहनैकशीलप्रसिद्धः, अस्मि । तत् सर्वं मेघाद्युद्दीपनकृताखिलकदनं, सहे मर्षयामि । तु पुनः, वैदेही विदेहराजदुहिता, कथं भविष्यति केन प्रकारेण जीविष्यति । इतिविमृश्य भावनया प्रत्यक्षीक्रियमाणां वैदेहीं तज्जनयित्रीं धरित्रीं वा सद्योमरणोन्मुखीं सम्भाव्याश्वासयति- हहा हा देवि ! सीते ! अथवा पृथ्वि ! धीराभव धृतिंवधान माशोकेन विदीर्णाभूरित्यर्थः । तथा च 'स्निग्धंमसृणम्' इत्यमरः ।

अत्र रामपदं स्ववाच्यार्थसम्बद्धं राज्यपरित्याग—भीषणगहनगमन—जटावल्कलवहन—जनकनिधन—दयिताहरणजन्यंदुःखातिशयसहनशीलं, तावताऽपि सम्भा-

वितजीवितत्वं च व्यनक्तीति वाच्यो दाशरथिरूपोऽर्थो व्यङ्ग्येष्वर्थान्तरेषु संक्रमित इत्यर्थान्तरसङ्क्रमितवाच्यध्वनिः ।

कान्तेःस्निग्धत्वश्यामलत्वाभ्यां झटितिमनोहरणशक्तिमुखेनोद्दीपनत्वातिशयः, वातानां शीकरित्वेन शैत्यमान्द्ये, बहुत्वेनानियतदिक्सम्बन्धः, तेनानिवार्यता, पयोदसौहृद्येन मयूराणा मानन्दौचिती, केकाया आनन्दजन्यतया भूय प्रवृत्तिः, ततोऽप्युद्दीपनतरत्वम्, प्रतीयते ।

लेपनसौहृदयो श्चेतनमात्रधर्मतया मेघे बाधाल्लिप्तसुहृत्पदयो र्व्यापनोपकारयोर्लक्षणलक्षणायां तत्तदतिशयो व्यङ्ग्य इति संसृष्टाभ्यामत्यन्ततिरस्कृतवाच्यध्वनिभ्या मर्थान्तरसंक्रमितवाच्यध्वनेः सङ्करः । अर्थान्तरसंक्रमितवाच्यध्वनिना च श्रृङ्गारध्वने रामपदैकवाचकानुप्रवेशेन सङ्करः । शब्दालङ्कारेण च संसृष्टिः ।

'तद्गेहं नतभित्ति मन्दिरमिदं लब्धावगाहं दिवः' इत्यादिवक्ष्यमाणश्लोके बुद्धिविषयताऽवच्छेदकत्वोपलक्षित–तत्तद्धर्म्मावच्छिन्नवाचकेन तच्छब्देनैव प्रतीतिसौकर्येऽपि 'नतभित्ति' इतिविशेषणवद्, रामशब्दमहिम्नैव सिद्धे 'कठोरहृदयः' इति विशेषण मर्थान्तरध्वनिं विकासयितुम् । तथाहि—तादृशविशेषणसाहाय्यमेव स्वानुकूलंव्यङ्ग्यमवगमयति । इतरथा रामपदं कौशल्या दशरथंप्रीतिपात्रत्वाद्यनुपयोगिव्यङ्ग्यमेव कथं न बोधयेदिति केचिदाहुः ।

यच्च काव्यालङ्कारसारकारः—श्लोकेऽस्मिन् पर्यायोक्तालङ्कारप्रभवमेव चमत्कारमवधार्य ध्वनिमधुनोत्, तन्न निरवद्यम्, व्यङ्ग्यस्यात्र विच्छित्तिविशेषाधायित्वेन गुणीभावाभावात् । शार्दूलविक्रीडितं छन्दः ॥

तदाह—

इत्यत्र रामशब्दः ।

अर्थान्तरसङ्क्रमितवाच्य इति शेषः एवमग्रेऽपि योजनीयम् ॥

उपपादयति—

अनेन हि व्यङ्ग्यधर्म्मान्तररूपपरिणतः सञ्ज्ञी प्रत्याय्यते, नतु सञ्ज्ञिमात्रम् ।

हि यतः अनेन रामशब्देन दाशरथिरूपवाच्यमात्रस्यानुपयोगाद् व्यङ्ग्यधर्म्मान्तरे तादृशदुःखातिशयसहनशीलवत्त्वे, परिणतोऽनुस्यूतः, सञ्ज्ञी दाशरथिरूपो वाच्योऽर्थः, प्रत्याय्यते बोध्यते; नतु सञ्ज्ञिमात्रं केवलो वाच्यइत्यर्थः । अतोऽर्थान्तरसंक्रमितवाच्योऽत्ररामशब्द इति सङ्गतिः ।

'नतु सञ्ज्ञामात्रम्' इति पाठस्त्वसङ्गतः, देवदत्तादिशब्दवदर्थे शक्तस्य रामशब्दस्यानपेक्षप्रवृत्तशब्दरूपायां संज्ञायां शक्त्यभावात् ततः प्रत्यायनासम्भवात् ।

'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥'

इत्यानुभविकोक्तेः सङ्केतसम्बन्धेन सञ्ज्ञाशब्दावच्छिन्ने शक्तिं स्वीकुर्वतां शाब्दिकानां नयेऽप्यर्थविधुरायाः सञ्ज्ञायास्ततो बोधो नानुभविक इति दिक् ॥

स्वीयञ्च पद्यमुदाहरति—

**यथा ममैव 'विषमबाणलीलायाम्'—**

पद्यमितिशेषः । विषमबाणलीलाऽऽख्ये काव्ये ॥

**'ताला जाअन्ति गुणा जाला दे सहिअएहिँ घेप्पन्ति ।
रइकिरणानुग्गहिआइँ होन्ति कमलाइँ कमलाइँ ॥**

'तदा जायन्ते गुणा यदा ते सहृदयैं गृह्यन्ते ।
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि ॥' इतिच्छाया ।

गुणाः पाण्डित्यादयः, तदा गुणा विशेषप्रशस्यताऽऽश्रया गुणा जायन्ते भवन्ति । यदा ते गुणाः, सहृदयैर्गुणज्ञै गृह्यन्ते ज्ञायन्ते । रवेः किरणैः, अनुगृहीतानि विकासनेनानुकम्पितानि, कमलानि कमलानि सौरभसौन्दर्य्यादिमन्ति भवन्तीत्यर्थः । जघनविपुलाच्छन्दः ।

अत्र यथा कमलानां सूर्यकिरणसंयोगेन विकास एव शोभाद्युत्कर्षः, तथा गुणानां सहृदयावगम एव विशेषप्रशस्यतेति प्रतिवस्तूपमाऽलङ्कारः । 'अर्थान्तरन्यासमाह—रविकिरणेति' इति लोचनलेखस्तु चिन्तनीयः, गुण—कमलादिपदार्थानां मिथः सामान्यविशेष—कार्यकारणभावाभावात् ।

द्वितीयकमलशब्दार्थस्य च व्यङ्ग्यवैशिष्टयेनाकारभेदाद्विभिन्नधर्मावच्छिन्नप्रकारताकोपस्थितिविषयतायाप्रथमकमलशब्दार्थेन सहाभेदान्वयबोधः । अन्यथा 'अभेदान्वयबोधश्च विरूपोपस्थितयोरेव' इतिव्युत्पत्तिविरोधस्य दुरुद्धरत्वमेव ।

यत्तु रुय्यकेन लाटानुप्रासोदाहरण मिदमुक्तम्, तदसत्, यतः—

'शाब्दस्तु लाटानुप्रासो भेदे तात्पर्यमात्रतः' ।

इति मम्मटोक्ततल्लक्षणघटकतात्पर्यपदं वक्त्रिच्छाविषयीभूतसंसर्गपरं प्रदीपो

द्योतयोर्व्याख्यातम् । तथाचात्र कमलशब्दयो र्न संसर्गमात्रेण भेदः, किन्तूत्तरांशे व्यङ्ग्यसङ्गतेरर्थेनापि भेदः ।

नच वाच्यार्थमात्रमादाय तयोरर्थभेदो वक्तुंशक्यत एवेति वाच्यम् , अर्थसामान्योपादाने व्यङ्ग्यस्य परिहर्तुमनौचित्यात् । अतएव विश्वनाथोऽपि—'नयने तस्यैव नयने च' इत्यत्र द्वितीयनयनशब्दो भाग्यवत्त्वादिगुणविशिष्टत्वरूपतात्पर्यमात्रेण भिन्नार्थः' इतिवदन्निदं प्रत्युदाहरणत्वेनोपन्यस्तवान् । अतएव च सप्तमोल्लासे—कथितपदत्वदोष–गुणत्वस्थलपरिगणनावसरे लाटानुप्रासतःपार्थक्येनेदमेव पद्यमर्थान्तरसङ्क्रमितवाच्यध्वनावुदाजहार प्रकाशकारः । इतरथोभयोरेकत्रैव समावेशे पृथगुपादानं वृथा स्यादिति दर्पणविवृतिप्रभृतावपि व्यक्तम् । अधिकं पुनरलङ्कारमञ्जूषायां निरूपयिष्यामः ॥

समन्वयमाह—

इत्यत्र द्वितीयः कमलशब्दः ।

'काकः कृष्णः पिकः कृष्णः कोभेदः पिककाकयोः ।
प्राप्ते वसन्तसमये काकः काकः पिकः पिकः ॥'

इत्यादौ द्वितीयकाकपिकशब्दवदर्थान्तरसङ्क्रमितवाच्यः सौन्दर्यादिगुणान्वितकमलबोधकत्वादितिशेषः ॥

अथात्यन्ततिरस्कृतवाच्यध्वनिमुदाहरति—

अत्यन्ततिरस्कृतवाच्यो यथाऽऽदिकवेर्वाल्मीकेः—

पञ्चवटीस्थो रामो हेमन्तं वर्णयति—

'रविसंक्रान्तलक्ष्मीक स्तुषारावृतमण्डलः ।
निश्श्वासान्ध इवादर्श श्चन्द्रमा न प्रकाशते ॥'

रवौ सङ्क्रान्ता हेमन्ते रवेरेवाह्लादकत्वात्, सङ्गता लक्ष्मीश्शोभा यस्य तादृशः, तथा तुषारैर्हिमैरावृतमाच्छादितं मण्डलं यस्य, स चन्द्रमाः, निश्श्वासेन मुखनासिकाऽनिलेन ( तत्संसर्गेण ) अन्धोमलिनः, आदर्शो दर्पण इव न प्रकाशते नो भासत इत्यर्थः ।

समन्वयमभिधत्ते—

इत्यत्रान्धशब्दः ।

अत्यन्ततिरस्कृतवाच्य इत्यर्थः । तथाहि—'अन्धदृष्ट्युपघाते' इतिधातुपाठा-

दन्धशब्दस्योपहतदृष्टिके शक्तिरवधार्यते । दर्पणे च दृष्टेरभावान्मुख्यार्थबाधादन्धशब्दो मालिन्यविशिष्टं लक्षयंस्तदतिशयमनुपयोगिताऽऽदि च द्योतयति । नच जनुपाऽन्धेऽप्यन्धशब्दप्रयोगेऽपीयमेवगतिः, गर्भएव तद्दृष्ट्युपघातस्य प्रामाणिकत्वात् । यदनुपहतदृष्टिकेऽपि 'अन्धोऽयं पुरोऽपि न पश्यति' इति प्रयोगः, तस्य तिरस्कृतिद्योतकत्वेन प्रमादिपरतया मुख्यार्थबाधवैधुर्याच्चेदन्त्वम् ।

यदपि भट्टनायकेन—'इवशब्दप्रयोगाद्गौणताऽप्यत्र न काचित्' इत्यनेन मुख्यार्थबाधविरहमुक्त्वाऽयं ध्वनिरितो निराकारि, तदप्यमनोरमम्, इवशब्दस्यात्रदर्पणप्रतियोगिकसादृश्यद्योतकतया सम्भावनाव्यञ्जकत्वाभावादन्धइवेत्युत्प्रेक्षाया अङ्गीकारासम्भवात्, उपमायान्तु मुख्यार्थबाधस्य जागरूकत्वाच्च ॥

पदगतमुदाहृत्य वाक्यगतं तं ध्वनिमुदाहरति—

'गअणं च मत्तमेहं धारालुलिअज्जुणाइँ अ वणाइँ ।
णिरहंकारमिअङ्का हरन्ति नीलाओ वि णिसाओ ॥'

'गगनं च मत्तमेघं धारालुलितार्जुनानि च वनानि ।
निरहङ्कारमृगाङ्का हरन्ति नीला अपि निशाः ॥' इतिच्छाया ।

मत्ता उद्धता मेघा यत्र तादृशं चापि ( न केवलं तारकितं ) गगनमाकाशम्, च तथा, धाराभिरासारै र्लुलिता इतस्ततश्चलिता अर्जुना वृक्षा वृक्षविशेषा वा येषु तानि चापि ( न परं मलयानिलमन्दान्दोलितमाकन्दानि ) वनानि, तथा निरहङ्कारश्शोभादारिद्र्येणापास्तदर्पो विच्छाय इतियावत्, मृगाङ्कश्चन्द्रमा यासु ताः, नीला अपि (नतु चन्द्रिकाक्षालिता एव) निशा रजन्यः, हरन्ति चित्तं वशीकुर्वन्तीत्यर्थः ।

अत्र क्षीवत्वाभिमानयो र्जीवधर्मतया मेघमृगाङ्कयोर्बाधात् क्रमेण परितो भ्रमणं मालिन्यं च लक्षयन्तौ मत्तनिरहङ्कारशब्दौ तदतिशयं व्यङ्क्तः ।

नन्वहङ्कारविरहस्य चन्द्रेऽबाधएवेति कुतोऽत्र लक्षणेति चेत्, मैवम्, अहङ्कारस्य चन्द्रे क्वचित्कदाचिदप्यनुपलम्भात्तदभावस्यापि घटे ज्ञानाभावस्येवोपलब्धुमशक्यत्वात् ॥

तदाह—

अत्र मत्तनिरहङ्कारशब्दौ ।

अत्यन्ततिरस्कृतवाच्या वितिशेषः । पदद्वयापेक्षतयाऽत्र वाक्यध्वनित्वमवधारणीयम् ॥

अथ प्राप्तावसरस्य विवक्षितान्यपरवाच्यध्वनेः स्वरूपप्रदर्शनगर्भं विभागं दर्शयति—

**असंलक्ष्यक्रमोद्द्योतः, क्रमेण द्योतितः परः ।**
**विवक्षिताभिधेयस्य ध्वनेरात्मा द्विधा मतः ॥ २४ ॥**

न सम्यग्लक्ष्योऽसंलक्ष्यः, स क्रमो यत्र, तादृश उद्द्योतः प्रकाशो यस्य स एकोऽसंलक्ष्यक्रमोध्वनिः, क्रमेण द्योतितः संलक्ष्यक्रमः, परो द्वितीयो ध्वनिरिति विवक्षिताभिधेयस्य विवक्षितान्यपरवाच्यस्य, ध्वनेर्ध्वन्यत इति योगात्प्रधानीभूतव्यङ्ग्यस्य, आत्मा स्वरूपं द्विधा द्विप्रकारको मतः सुधीभिरित्यर्थः ॥

विवृणोति—

**मुख्यतया प्रकाशमानो व्यङ्ग्योऽर्थो ध्वनेरात्मा । स च वाच्यार्थापेक्षया कश्चिदलक्ष्यक्रमतया प्रकाशते, कश्चित् क्रमेणेति द्विधा मतः ।**

वाच्यविभावादिप्रतीते र्व्यङ्ग्यरसादिप्रतीतौ हेतुतया, ततः प्राक्सत्त्वमवश्यं कल्पनीयमिति तयोः क्रमोऽनायत्या कल्प्यते । किन्तु व्यङ्ग्यप्रतीते राशुभावितयोत्पलदलशतभेदवत् क्रमः सम्यङ् न लक्ष्यते । अतएव वाच्यार्थेन सह तस्य प्रकाशभ्रमोऽपि संघटते । सोऽयमसंलक्ष्यक्रमो नाम ध्वनिः । क्वचित्तु ध्वनिप्रतिध्वनिवद् वाच्यव्यङ्ग्यप्रतीत्योः क्रमः स्फुटं लक्ष्यत एव । सच संलक्ष्यक्रमो ध्वनिरितिद्वैविध्यंध्वनेरितिसारम् । तुल्यमितिपाठे सहेवेत्यर्थः ।

विस्तरेण क्रमस्थापना तृतीयोद्द्योते करिष्यते । प्रथमकारिकया वाच्यभेदप्रयोज्यो ध्वनिभेदउक्तः । अनयातु क्रमसम्यग्लक्ष्यालक्ष्यत्वप्रयोज्यः स उच्यत इति विशेषः ।

असंलक्ष्यक्रमध्वनिं लक्षयन् विभजते—

**तत्र ।**

तत्र ध्वनिद्वये ।

**रसभाव–तदाभास–भावशान्त्यादिरक्रमः ।**
**ध्वने रात्माऽङ्गिभावेन भासमानो व्यवस्थितः ॥ २५ ॥**

रसा आवरणभङ्गावच्छिन्नरत्याद्यवच्छिन्नचिद्रूपाः श्रृङ्गारवीरकरुणाद्भुतहास्यभयानकबीभत्सरौद्रशान्तेतिनवप्रभेदाः, भावा रसरूपतासम्पादकविभावादिसंसर्ग-

विरहिताः केवलाः स्थायिनः, प्राधान्येन व्यक्ता व्यभिचारिणश्च, तदाभासा अनौचित्येन प्रवृत्तेर्दुष्टा रसा रसाभासा दुष्टा भावा भावाभासाश्च, तत्प्रशान्तिर्भावस्योक्तरूपस्य शान्तिः प्रशाम्यदवस्था, आदिः प्रधानं यस्य स तादृशः, अक्रमोऽसंलक्ष्यक्रमः, अङ्गित्वेन प्राधान्येन, भासमानः सहृदयचर्वणा—गोचरीभवन्, ध्वनेर्विवक्षितान्यपरवाच्यप्रकारस्य, आत्मा स्वरूपं व्यवस्थितइत्यर्थः ।

समष्टितात्पर्येणादिशब्दादेकवचनम् । तेन च भावोदय—भावसन्धि—भावशबलत्वानि गृह्यन्ते । भावस्योक्तरूपस्योदय उद्गमावस्था, सन्धि स्तयोस्तुल्यकक्षयो र्युगपदास्वादः, शबलता निरन्तरतया तेषां पूर्वपूर्वोपमर्दिनामास्वादः । उदयमात्रस्य शान्तिमात्रस्य चास्वादाभावाद्भावशबलत्वतउदयशान्त्योर्भेदः । विस्तरेण तूद्द्योते नागेशेन तेषां मिथः पार्थक्यं विवेचितम् । अपरिच्छिन्नानन्दचिन्मयब्रह्मसतत्त्वस्य रसस्य शान्त्युदयसन्धिशबलत्वानि नैव सम्भवन्ति, तस्माद्भावानुबन्धीन्येवैतान्यास्वादपदवीमवतरन्ति । ननु विभावानुभावयोरपि भाववच्चमत्कारभूमितया नकथं तद्ध्वनिरितिचेत्, न तयोर्वाच्यतायामेव चमत्कारित्वात्, तच्चर्वणायाश्चित्तवृत्तिष्वेव पर्यवसानाच्च । तयोरपि कथञ्चन व्यज्यमानतादशायान्तु वस्तुध्वनिकुक्षिप्रवेशएवेति लोचने व्यक्तम् । रसभावादीनां स्वरूपनिरूपणमाचार्य्यैं राकरेषु, मया रसमञ्जरीसुरभौ च विहितमेवेति नेह तत्प्रतन्यते, उदाहरणानि पुनरेषां क्रमेणविदग्धविनोदाय निर्दिश्यन्ते ।

तत्र सम्भोगशृङ्गाररसो यथा भवभूतेरुत्तररामचरिते—

'किमपि किमपि मन्दं मन्दमासत्तियोगादविरलितकपोलं जल्पतो रक्रमेण ।
अशिथिलपरिरम्भव्यापृतैकैकदोष्णो रविदितगतयामा रात्रिरेव व्यरंसीत् ॥'

श्रीकृष्णविषयो रतिभावो यथा मम राधापरिणये शक्रसुरभिस्तवे—

'जपारागप्रेङ्खन्महिममहनीयाङ्गुलिदले शरद्राकाऽधीशोज्ज्वलनखमहः—केसरवृते ।
पदाम्भोजे भक्तव्रजहृदयभृङ्गोपचरिते तवास्मत्संसारज्वरपरमशान्त्यै प्रभवताम् ॥'

रसाभासो यथा कालिदासस्य कुमारसम्भवे वसन्तवर्णने—

मधुद्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्तमानः ।
शृङ्गेण च स्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः ॥

यथा वा मदीये राधापरिणये निदाघवर्णने—

'उन्मदोऽसितमणिप्रभलोलद्—भृङ्गजातपरिवीतकपोलः ।

कानने मुकुलितानन्नकोशां, वासितामनुससार करीन्द्रः ॥

अनयोस्तिर्यग्विषयत्वादनौचित्यप्रवृत्तिः ॥

भावाभासो यथा जगन्नाथस्य भामिनीविलासे करुणोल्लासे—

'सर्वेऽपि विस्मृतिपथं विषयाः प्रयाता विद्याऽपि खेदकलिता विमुखीबभूव ।
सा केवलं हरिणशावकलोचना मे नैवापयाति हृदयादधिदेवतेव ॥

गुरुकन्याविषयकत्वेन रतेरिहानौचित्यप्रवृत्तिः ॥

भावशान्तिर्यथा ऽमरुककवेः शतके—

'सुतनु ! जहिहि कोपं पश्य पादानतं मां न खलु तव कदाचित् कोप एवंविधोऽभूत् ।
इति निगदति नाथे तिर्यगामीलिताक्ष्या नयनजलमनल्पं मुक्तमुक्तं न किञ्चित् ॥'

इह नयनजलमोचनेनेर्ष्यारूपव्यभिचारिभावस्य प्राधान्यभाजः शान्तिः ॥

भावोदयो यथा तस्य तत्रैव—

'चरणपतनप्रत्याख्यानात् प्रसादपराङ्मुखे निभृतकितवाचारेत्युक्त्वा रुषा परुषीकृते ।
व्रजति रमणे निश्वस्योच्चैः स्तनस्थितहस्तया नयनसलिलच्छन्ना दृष्टिः सखीषु निवेशिता ॥'

अत्र व्यभिचारिणो विषादस्योदयः ॥

भावसन्धिर्यथा भवभूतेर्महावीरचरिते—

'उत्सिक्तस्य तपःपराक्रमनिधेरभ्यागमादेकतः,
सत्सङ्गप्रियता च वीररभसोत्फालश्च मां कर्षतः ।
वैदेहीपरिरम्भ एषच मुहुश्चैतन्य मामीलय-
न्नानन्दी हरिचन्दनेन्दुशिशिरस्निग्धो रुणद्धयन्यतः ॥'

इहावेगहर्षयोः समकक्षयोर्व्यभिचारिणोः सन्धिः ॥

शबलता यथा विद्यानाथस्य प्रतापरुद्रयशोभूषणे—

'निन्दन्त्वत्र कुलस्त्रियः प्रियतमो लभ्यः सुखं केन वा,
भाग्येनानुमतं नकिं गुरुजनैः कावा सखी प्रेष्यते ।
किं लोकस्य भवेत्प्रसिद्धमचिरात् स्वच्छन्दमङ्कं कदाऽऽ-
रोक्ष्यामि स्थिरता कदा हृदि भवेद्यातव्य एव प्रियः ॥'

अत्र लज्जा–वितर्क–दैन्य–विषाद–शङ्कौ–त्सुक्य–धृति–मतयो व्यभिचारिणः क्रमेण प्रतीयन्ते ॥

असंलक्ष्यक्रमत्वोपपत्तिमभिधत्ते—

**रसादिरर्थो हि सहेव वाच्येनावभासते। स चाङ्गित्वेनावभासमानो ध्वने रात्मा।**

हि यतो रसादिर्व्यङ्ग्योऽर्थो वाच्येन विभावादिना सह इव नतु सहैव, नवा विलम्बेन, अवभासते प्रतीतिविषयोभवति, तस्मादसंलक्ष्यक्रमः, कार्यकारणभावेन निर्णीतस्य क्रमस्य सम्यगलक्ष्यत्वात्। स रसादिश्च, अङ्गित्वेन प्राधान्येन अवभासमानः प्रतीतिगोचरीभवन्, ध्वनेरात्मा स्वरूपमित्यर्थः।

'सहैव' इति पाठस्यासङ्गतिस्तु प्रागेव दर्शिता। अतएंव च 'इवशब्देनासंलक्ष्यता विद्यमानत्वेऽपि क्रमस्य व्याख्याता' इति लोचनं सङ्गच्छते॥

नन्वङ्गिनोऽपि रसादिध्वने रसवदाद्यलङ्कारेभ्यः कोभेदः इत्याशङ्कां' कारिकाद्वितयेन समाधातुमवतारयति—

**ईदानीं रसवदाद्यलङ्कारादलक्ष्यक्रमद्योतनात्मनो ध्वने र्विभक्तो विषय इति प्रदर्श्यते—**

अलक्ष्यक्रमद्योतनात्मनोऽसंलक्ष्यक्रमस्य रसादिध्वनेः। विभक्तोऽतिरिक्तः। विषयोलक्ष्यः। अलङ्कारादिति जातितात्पर्यकमेकवचनं प्रदर्श्यते, प्रस्तुतकारिकाभ्यामितिशेषः॥

**वाच्यवाचकचारुत्व-हेतूनां विविधात्मनाम्।**
**रसादिपरता यत्र स ध्वनेर्विषयो मतः॥ २६॥**

यत्र काव्ये विविधात्मनां नानारूपाणां, वाच्यं च वाचकं च तच्चारुहेतवश्चेति तेषां शब्दार्थ-तदुभयालङ्कारादीनाम्, रसादिपरता प्रधानीभूतरसादिव्यङ्ग्योपस्कारकत्वम्, भवतीतिशेषः, स ध्वने र्विषयो लक्ष्यो मतः प्रागुक्त इत्यर्थः।

विभागाय पुनरिहोपादानं ध्वनेरवगमनीयम्॥

तदाह वृत्तिकृत्—

**रस-भाव-तदाभास-तत्प्रशमलक्षणं मुख्यमर्थमनुवर्तमाना यत्र शब्दार्थालङ्कारा गुणाश्च परस्परं ध्वन्यपेक्षया च विभिन्नरूपा व्यवस्थिताः, तत्र काव्ये ध्वनिरिति व्यपदेशः।**

तत्प्रशमपदं भावोदयादीनां त्रयाणामप्युपलक्षणम्। अनुवर्तनमुपस्करणम्।

प्राग्वच्छब्दश्चार्थश्चालङ्कारश्चेतिद्वन्द्वः । शब्दादीनां स्वरूपतोऽधिकरणभेदतश्च भेदोऽवसेयः । अन्यत्स्फुटम् ॥

**प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः ।**
**काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः ॥ २७ ॥**

तु पुनः, यत्र काव्ये, अन्यत्रान्यस्मिन् स्वभिन्ने वस्त्वलङ्काररसादिरूपे व्यङ्ग्ये, वाच्ये वा वस्त्वलङ्कारलक्षणे, वाक्यार्थे तदर्थबोधे, प्रधाने सति, रसादयो नातिचमत्कारितयाऽङ्गम्, तस्मिन् काव्ये रसादिः—नामैकदेशग्रहणे नामग्रहणं देवदत्तोदत्तः इति न्यायेन रसवदादिः 'रसवत्, प्रेय ऊर्जस्वि, समाहितम्, भावोदयम्, भावसन्धि, भावशबलत्वम्' अलङ्कारो भवतीति मे मतिरित्यर्थः ।

अत्र 'मे मतिः' इत्युक्तिरेव खण्डनीयपक्षान्तराणामपि सद्भावं सूचयति । तथाच 'रसादीनामलङ्कार्यत्वेन शब्दार्थवृत्त्यभावेन च नालङ्कारता' 'रसादीनामङ्गितायामेव रसवदाद्यलङ्काराः, अङ्गतायान्तूदात्तालङ्कारस्य द्वितीयोभेदः' 'रसादिषु रूपकादिसाम्यादलङ्कारत्वव्यपदेशो गौणः' इत्यादय औद्भटाः पक्षाः पूर्वपक्षायमाणाःसमुल्लसन्ति।

तत्खण्डनान्यपि क्रमशः 'प्रधानानामेव रसादीनामलङ्कार्यता, प्रकृतेत्वङ्गत्वमेवेत्यलङ्कारतैव, शब्दार्थवृत्तित्वं नालङ्कारतायां नियामकम्, किन्तु चमत्कारः, सच प्रकृतेऽप्यक्षतः । यद्वा व्यङ्ग्यव्यञ्जकभावेन रसादीनां शब्दार्थयोरपि वृत्तिः' 'रसादीनामङ्गित्वे, स्वयमेवालङ्कार्यत्वात् कुतोऽलङ्कारता ? । अङ्गताया मुदात्तालङ्कारप्रकारकल्पना न सम्भवति, तत्र महतां चरितस्यैवोपलक्षणत्वनियमो ननु रसादीनाम्' 'विच्छित्तिविशेषकृत्स्वरूपमुख्यधर्म्मयोगेऽपि कुतोव्यवहारस्य गौणत्वम् ? इत्यादीनि ज्ञेयानि ।

इत्थञ्च रसस्याङ्गत्वे रसवत्, भावस्य प्रेयः, रसाभासस्य भावाभासस्यचोर्ज्जस्वि, भावशान्तेः समाहितम्, भावोदयस्य भावोदयम्, भावसन्धेर्भावसन्धि, भावशबलताया भावशबलत्वं चालङ्कारोऽवधारणीयः ॥

तदाह वृत्तिकारः—

यद्यपि रसवदलङ्कारस्यान्यै र्दर्शितो विषयः, तथापि यस्मिन् काव्ये प्रधानतयाऽन्योऽर्थो वाक्यार्थीभूतः, तस्य चाङ्गभूता ये रसादयः,ते रसादेरलङ्कारस्य विषया इति मामकीनः पक्षः ।

चकारस्त्वर्थकः। उद्भटादिभि र्यद्यपि रसादीनां वाक्यार्थबोधे प्राधान्यएव रसवदाद्यलङ्कारा उक्ताः, किन्तूक्तयुक्त्या सिद्धान्तभूतेऽस्मन्मते रसादीनां तत्राप्रधानतायामेव तेऽलङ्कारा इतिसारम् । यद्यपीत्यनेन परमतस्य युक्तिरिक्तत्वम् , तथाऽपीत्यनेन स्वमतस्यागतार्थत्वं च सूच्यते ॥

निदर्शनेन स्वमतं द्रढयति—

**तद्यथा—चाटुषु प्रेयोलङ्कारस्य वाक्यार्थत्वेऽपि रसादयोऽङ्गभूता दृश्यन्ते ।**

तद् रसादीनामङ्गत्वं यथाऽनुपदंवक्ष्यमाणोदाहरणे—चाटुषु राजादिमृषाप्रशंसासु, भामहोक्तरीत्याप्रेयोऽलङ्कारो यस्मिन् स प्रेयोऽलङ्कारो वाक्यार्थबोधप्रधानीभूतोऽर्थः, तस्य वाक्यार्थत्वे तद्बोधप्राधान्येऽपि, रसादयोऽङ्गभूता दृश्यन्ते, नतु प्रधानीभूता इत्यर्थः ।

उद्भटानुसारिणस्तु भिन्नक्रममपिशब्दं मत्वा प्रेयोऽलङ्कारसङ्ग्राहकं वाक्यमिदमङ्गीकृत्य 'चाटुषु (षष्ठ्यर्थेसप्तमी) चाटूनां वाक्यार्थत्वे प्रेयोऽलङ्कारोऽपि, न केवलं रसवदलङ्कारः' इतिव्याचक्षते ।

परन्तु षष्ठ्यर्थे सप्तम्या अननुशिष्टायां इह कल्पने क्लेशादुक्तं भामहानुसारिव्याख्यानमेव ज्यायः । वस्तुतस्तु चाटुषु प्रशंसनीयविषयकरतिभावस्य प्राधान्यान्न प्रेयोऽलङ्कारत्वम् , तेन तत्र रसादीनां प्रधानीभूतभावाङ्गतयैव रसवदाद्यलङ्कारत्वमिति द्रष्टव्यम् ॥

तत्र रसवदलङ्कारं द्विधा विभजते—

**सच रसादिरलङ्कारः शुद्धः सङ्कीर्णो वा ।**

वाशब्दः स मुच्चये । यत्रान्यामिश्रणं स शुद्धः, यत्रचावयवावयविभावेनान्यमिश्रणं ससङ्कीर्णः । रसादीरसवदादिः ॥

उदाहरति—

**तत्राद्यो यथा—**

तत्र शुद्धसङ्कीर्णयोर्मध्ये आद्यः शुद्धः ।

चाटुकारो राजानं प्रसादयति—

**'किं हास्येन न मे प्रयास्यसि पुनः प्राप्तश्चिराद्दर्शनं,**
**केयं निष्करुण ! प्रवासरुचिता ? केनासि दूरीकृतः ? ।**
**स्वप्नान्तेष्विति ते वदन् प्रियतमव्यासक्तकण्ठग्रहो,**

बुद्ध्वा रोदिति रिक्तबाहुवलयस्तारं रिपुस्त्रीजनः ॥'

हास्येन प्रणयपरिहासेन किम् ? नकिमपि । चिरान्मे दर्शनं दृष्टिविषयं प्राप्तो ननु बुद्धिपूर्वकं स्वयमागतस्त्वं पुन र्न प्रयास्यसि प्रस्थातुं शक्ष्यसि भुजनिगडनिबद्धो मोक्षं न लप्स्यस इति यावत् । हे निष्करुण ! निर्दय ! कान्त ! तव इयमनिवार्या, प्रवासे विदेशवासे रुचिरासक्ति र्यस्य तद्भावः प्रवासरुचिता का ? अनुचितेतियावत् । केन ममापराधेन दुर्भाग्येन वा दूरीकृतः, असि, इत्येवं स्वप्नान्तेषूत्स्वप्नायितेषु, वदन् व्याहरन्, प्रियतमे विशेषादासक्तः सम्बद्धः कण्ठस्य ग्रहो ग्रहणं येन स तादृशः ते तव रिपूणां स्त्रीजनः, बुद्ध्वा जागरित्वा, रिक्तं प्रियेणशून्यं बाहुवलयं भुजमण्डलं यस्य तथाभूतः, तारमुच्चै रोदितीत्यर्थः ।

इह 'किं हास्येन' इत्यनेन हसत एव प्रियतमस्य स्वप्नेऽवलोकनम्, 'न मे प्रयास्यसि पुनः' इत्यनेन भुजशृङ्खलया दृढं सम्यँतस्य मोक्षासम्भवः, द्वाभ्यां शठत्वावगमोत्तरमुपालम्भौचित्यम्, 'निष्करुणे'त्यनेन प्रवासरुचितोपपत्तिः, 'केने'त्यनेन तदसह्यापराधानामपि सदातूष्णीम्मर्षणम्, 'स्वप्नान्तेषु' इति बहुवचनेन स्वप्नानां पुनःपुनरुद्भूततया बहुत्वम्, रिक्तबाहुवलयत्वेन रोदनौचित्यम्, रोदनस्य तारत्वेन शोकस्यासह्यता च सूच्यते ।

अत्र वस्त्वन्तरेणानुपस्कृतः स्वप्नदर्शनोद्दीपितः शोकस्थायिभावकः करुणरसः स्तुत्यराजप्रभावातिशयस्य वस्तुनोऽङ्गमिति शुद्धो रसवदलङ्कारः ॥

तदाह वृत्तिकृत्—

इत्यत्र करुणरसस्य शुद्धस्याङ्गभावात् स्पष्टमेव रसवदलङ्कारत्वम् ।

लक्ष्यान्तराणामपि संग्रहाय व्याहरति—

एवमेवंविधे विषये रसान्तराणां स्पष्ट एवाङ्गभावः ।

एवंविधे वस्तुप्राधान्यभाजि चाटुरूप इत्यर्थः ।

अथ द्वितीयमुदाहर्तुमाह—

सङ्कीर्णो रसादिरङ्गभूतो यथा—

अमरुककविर्मङ्गलमाचरति—

'क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं,
गृह्णन् केशेष्वपास्त श्चरणनिपतितो नेक्षितः सम्भ्रमेण ।
आलिङ्गन् योऽवधूत स्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः;

कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः ॥"

आर्द्रापराधस्तत्कालकृतपराङ्गनासङ्गलक्षणापराधः, कामीकामुकइव, साश्रूणि भयेन कोपेन च बाष्पपूर्णानि, नेत्रोत्पलानि नयनकमलानि यासां ताभि स्त्रिपुरयुवतिभि स्त्रिपुरासुरतरुणीभिः, हस्तेऽवलग्नो हस्तस्पर्शी क्षिप्तः पृथक्कृतस्तिरस्कृतश्च, प्रसभं हठात्, अंशुकान्तं वसनाञ्चलम्, आददान। गृह्णन्नपि, अभिहतोनिर्धूत स्ताडितश्च, यद्वा प्रभसमभिहतोऽप्यंशुकान्तमाददानः, केशेषु केशावच्छेदेन गृह्णन्नामृशन्नुपाददञ्च, अपास्तो दूरीकृतोऽनादृतश्च, चरणयोर्निपतितो भ्रष्टः प्रणतश्च, सम्भ्रमेण भयेन संवेगेन च नेक्षितोऽनवलोकितः, तथा य आलिङ्गन्नुपगूहन् संस्पृशंश्च, अवधूतः प्रक्षिप्तोऽवहेलितश्च स शम्भोरयं शाम्भवः शिवनियुक्तः, शराग्नि र्बाणवह्निः, वो युष्माकं, दुरितं पापं दहतु भस्मीकरोत्वित्यर्थः ।

तथाच 'सम्भ्रमः साध्वसेऽपि स्यात् संवेगादरयोरपि' इति मेदिनी । स्रग्धराच्छन्दः ।

उपादानोपयोगं दर्शयति वृत्तिकारः—

इत्यत्र त्रिपुररिपुप्रभावातिशयस्य वाक्यार्थत्वे, ईर्ष्याविप्रलम्भस्य श्लेपसहितस्याङ्गभाव इत्येवंविधएव रसवदलङ्कारस्य न्याय्यो विषयः।

अत्रोक्तश्लोके त्रिपुररिपोः शिवस्य, प्रभावातिशयस्य महिमोत्कर्षस्य, वाक्यार्थबोधविषयत्वेन प्राधान्येऽङ्गित्व इति यावत्, श्लेषोपस्कृतस्येर्ष्याविप्रलम्भाख्यशृङ्गाररसस्य, अङ्गभावोऽङ्गित्वम्, इति हेतोः, एवं विधएतादृशोऽप्रधानीभूतरसक एव, नतु रसप्राधान्यवानपि, रसवदलङ्कारस्य विषयो न्याय्यो न्यायादनपेतस्समुचित इत्यर्थः ।

अत्रहि शिवप्रभावातिशयोऽङ्गी, परेषांतस्यैवोपस्करणात् तस्येर्ष्याविप्रलम्भोऽङ्गम्, सच न शुद्धः, किन्तुश्लेषालङ्कारप्रसाधित इति सङ्कीर्णस्य रसस्याङ्गत्वम्। श्लेषस्तुक्षिप्तइत्यादिष्वर्थगतः। यद्यपि करुणोऽपीहास्त्येव रसः, तथाऽपि तस्य विच्छित्तिविशेषानाधायकत्वादङ्गाङ्गत्वेनानुपादानमित्येके ।

परेतु श्लेषस्य च्छायात्मनो नेहप्ररोहः, अतः शिवप्रभावातिशयस्याङ्गिनोवस्तुनः शिवविषयकरतेर्भावस्यवा करुणः, तस्य च विप्रलम्भशृङ्गारो रसोऽङ्गमित्येवं सङ्कीर्णतां वदन्ति ।

उपोद्घलकमाह—

**अतएव चेर्ष्याविप्रलम्भकरुणयोरङ्गत्वेन व्यवस्थानात्समावेशो न दोषः।**

अतएव शृङ्गारस्याप्रधानत्वादेव, मिथो विरुद्धयोरपि शृङ्गारकरुणयो रङ्गिनो वस्तुनोऽङ्गत्वेन व्यवस्थानात् स्थितेः, समावेशो सन्निवेशे, न दोषइत्यर्थः ।

तृतीयोद्द्योते दर्शयिष्यमाणया रीत्या विरुद्धयोरपि रसयोः समावेशः पराङ्गत्वेन न दोषावहः । यद्युभयो रसयोरङ्गत्वं न स्यात्तर्हि समावेशोऽप्येकत्र दुष्टः स्यादिति सारम् ॥

एवंविध एवेत्येवशब्दार्थं समर्थयति—

**यत्र हि रसस्य वाक्यार्थीभावः, तत्र कथमलङ्कारत्वम् ।**

यतो रसः प्रधानम् , तस्मान्नालङ्कार इति निष्कर्षः ॥

तत्र हेतुमाह—

**अलङ्कारो हि चारुत्वहेतुः प्रसिद्धः । नत्वसावात्मैवात्मनश्चारुत्वहेतुः ।**

यथाऽऽत्मनः शोभायाः सम्पादकः कटकादिरलङ्कारः, तथाऽङ्गिनो रसादेरुपमाऽऽदिः । इत्थं च प्रधानस्य रसस्येतरचारुतासम्पादकत्वाभावान्नालङ्कारत्वम् तत्त्वे च न प्राधान्यम् । अलङ्कारस्य ध्वन्यमानतादशायां क्वचित्तद्व्यपदेशस्तु गौणो ब्राह्मणश्रमणन्यायेन भूतपूर्वालङ्कारत्वमादायैव, अङ्गित्वालङ्कारत्वयोर्विरोधात् । नहि स्वनिष्ठसुषमायाः सम्पादकः स्वयम्भवितुमर्हति, अलङ्कार्य्यालङ्कारभावस्य भेदप्रतिष्ठानात् ।

उपसंहरति—

**तथाचायमत्र संक्षेपः—**

**'रसभावादितात्पर्यमाश्रित्य विनिवेशनम् ।**
**अलङ्कृतीनां सर्वासामलङ्कारत्वसाधनम् ॥ २८॥**

सर्वासामुपमाऽऽदीनामलङ्कृतीनामलङ्काराणां, रसभावादीनामुक्तप्रतीयमानप्रधानानां, तात्पर्य्यमलञ्चिकीर्षाम् , आश्रित्य, विनिवेशनं विन्यसनम् , अलङ्कारत्वस्य, साधनंप्रयोजकमित्यर्थः ।

रसादेरात्मभूतस्योत्कर्षं कुर्वतामेवोपमादीनामलङ्कारत्वम् , नतु स्वरूपतइतिता-

त्पर्य्यम् । ननु वाच्यवृत्तीनामुपमाऽऽदीनां रसाद्युत्कर्षणमसम्भवि साक्षात्सम्बन्धाभावादितिचेत्, मैवम्, शरीरवृत्तीनां कटककुण्डलादीनां शरीरद्वाराऽऽत्मन इव, काव्यावयववृत्तीनामुपमाऽऽदीनां तदात्मभूतस्य रसादेरवयवद्वारा परम्परयोत्कर्षस्य जनकत्वेऽप्यलङ्कारतायाः सुवचत्वात् ।

यथा कटकादयो न शरीरमात्रमलङ्कुर्वन्ति, किन्तु तद्द्वाराऽऽत्मानम् । इतरथा नकथं शवशरीराश्रयिणां तेषामलङ्कारत्वम् । 'अहमलङ्कृतः' 'ममायमलङ्कारः' इत्यादिप्रतीतिविषयताचात्मनएवभवति, नतुशरीरस्य । तथैवोपमाऽऽदयो न केवलं काव्यावयवमलङ्कुर्वन्ति, अपित्वात्मभूतं रसादिम् । क्वचिद्रसादितात्पर्य्यविरहेऽप्यलङ्कारत्वव्यपदेशस्तु सादृश्यहेतुकत्वादौपचारिक एव ।

भाववोधकक्तिन्प्रत्ययान्तालङ्कृतिपदस्योपमाऽऽदिवोधकत्वमपि लक्षणामन्तरेण न सम्भवतीति द्रष्टव्यम् ॥

पर्यवसितं दर्शयति—

**तस्माद्यत्र रसादयोवाक्यार्थीभूताः, स सर्वो न रसादेरलङ्कारस्य विषयः, स ध्वनेः प्रभेदः । तस्योपमाऽऽदयोऽलङ्काराः । यत्र तु प्राधान्येनार्थान्तरस्य वाक्यार्थीभावे, रसादिभिश्चारुत्वनिष्पत्तिः क्रियते स रसादेरलङ्कारताया विषयः ।**

तस्माद्रसादीनां प्राधान्येऽलङ्कारत्वाभावाद्धेतोः यत्र रसादीनांवाक्यार्थबोधप्राधान्यम्, तत्र न रसवदाद्यलङ्काराणां प्रसरः, किन्तु रसादिध्वनेरेव, रसादीनामलङ्कार्यत्वात् । उपमाऽऽदयस्तु प्रधानीभूतस्य तस्य प्रसाधकत्वादलङ्काराः । यत्र पुनरर्थान्तरस्य वस्तुनोऽलङ्कारस्य रसादेर्वा वाक्यार्थवोधप्राधान्यम्, रसादिभिश्च तस्य चारुत्वस्य शोभाविशेषस्य, निष्पत्तिः सम्पादनं, क्रियते । तत्र रसादीनां प्रधानालङ्कारकत्वादलङ्कारत्वस्य प्रसर इत्यर्थः ।

'न रसादेरलङ्कारस्य वा विषयाः' इति पाठस्तु वाशब्दर्थस्यान्वयायोग्यत्वादुपेक्षितः ।

रसादीनां प्राधान्ये ध्वनिः उपमाऽऽदीनां तदुपकारत्वेऽलङ्कारत्वम्, रसादेरन्यस्य व्यङ्ग्यस्य प्राधान्ये रसादेः पुनरङ्गत्वे रसवदादयोऽलङ्कारा इति विषयविभागः स्फुटमवगन्तव्यः ॥

तदाह—

**एवं ध्वनेरुपमाऽऽदीनां रसवदलङ्कारस्य च विभक्तविषयता भवति ।**

विभक्तो विषयो येषां ते विभक्तविषया स्तेषां भावो विषयविभाग इत्यर्थः ।
तत्र रसवदलङ्कारस्योदाहरणद्वयमुक्तमेव ।
प्रेयसो यथा—

'तद्वक्त्रामृतपानदुर्ललितया दृष्ट्या क्व विश्रम्यताम् ?
तद्वाक्यश्रवणाभियोगपरयोः श्राव्यं कुतः कर्णयोः ।
एभिस्तत्परिरम्भनिर्भरतरैरङ्गैः कथं स्थीयतां
कष्टं तद्विरहेण सम्प्रति वयं कृच्छ्रामवस्थां गताः ॥'

अत्र चिन्तारूपस्य व्यभिचारिभावस्य विप्रलम्भाङ्गतया प्रेयोऽलङ्कारः ।
ऊर्जस्विनो यथाऽभिनवगुप्तपादानां देवतास्तोत्रे—

'समस्तगुणसम्पदः सममलंक्रियाणां गुणै-
र्भवन्ति यदिभूषणं तव तथाऽपि नो शोभसे ।
शिवं हृदयवल्लभं यदि यथा तथा रञ्जये-
स्तदेव ननु वाणि ! ते जगति सर्वलोकोत्तरम् ॥'

अत्रहि परमेशस्तुतिमात्रं वाचः परमोपादेयमिति वाक्यार्थे शृङ्गाररसाभासोऽङ्गम् ।

'स पातु वो यस्य हतावशेषा-स्तत्तुल्यवर्णाञ्जनरञ्जितेषु ।
लावण्ययुक्तेष्वपि वित्रसन्ति, दैत्याः स्वकान्तानयनोत्पलेषु ॥'

इत्यत्र रौद्रप्रभृतीनामनुचितत्त्रासो भगवत्प्रभावातिशयस्याङ्गम् ।
समाहितस्य यथा—'अक्ष्णोः स्फुटाश्रुकलुषोऽरुणिमा विलीनः,
शान्तं च सार्धमधरस्फुरणं भ्रुकुट्या ।
भावान्तरस्य तव चण्डि ! गतोऽपि रोषो,
नोद्गाढवासनतया प्रसरं ददाति ॥'

अत्रानौचित्यप्रवृत्तस्य कोपभावस्यशान्ति श्शृङ्गारस्याङ्गम् ।
भावोदयस्य यथा—'साकं कुरङ्गकदृशा मधुपानलीलां,
कर्तुं सुहृद्भिरपि वैरिणि सम्प्रवृत्ते ।
अन्याभिधायि तव नाम विभो ! गृहीतं,
केनापि तत्र विषमामकरोदवस्थाम् ॥'

अत्र त्रासभावोदयस्य राजरतिभावाङ्गत्वम् ।
भावसन्धेर्यथा—'जन्मान्तरीगरमगस्यांङ्गसङ्गसमुत्सुका ।

ननु तेन काक्षतिरित्यतआह—

**एवं वा वाल्मीकिव्यतिरिक्तस्यान्यस्य कवि ( जनस्य कृते व्यर्थत्वापातः )।**

वाशब्दश्चकारार्थकः । 'एवं वा' इति सन्दर्भशुद्ध्यनुरोधेन पूर्ववाक्यएवोत्तरवाक्यादपकृष्टम्, उत्तरवाक्ये तस्यानपेक्षणादत्रापेक्षितत्वाच्च । एवं प्रकोष्ठान्तर्गतः पाठश्चोहितएव ।

अन्यकविकृते व्यर्थत्वापाते हेतुमाचष्टे—

**सामान्यव्यतिरिक्तस्यान्यस्य काव्यार्थस्याभावात्, सामान्यस्य चातिकविनैव प्रदर्शितत्वात् ।**

चकारस्त्वर्थकः । वाल्मीकिना सर्वमर्थसामान्यं हि वर्णितमेवेति पुनस्तद्वर्णनमर्वाचीनानां चर्वितचर्वणमेवेति—तत्काव्यानर्थक्याय कल्पेत, तस्मादर्थविशेषेणापि काव्यप्रवृत्तिरवश्यं स्वीकरणीया, नत्वर्थसामान्यमात्रेणेत्याकूतम् ।

ननूक्तमाल्यतुल्यन्यायेनोक्तिवैचित्र्यमात्रेण नवीनकविकृतेश्चमत्कारिता स्यादेवेति शङ्कामुपपादनेन निराकरोति—

**उक्तिवैचित्र्यान्नैष दोष इति चेत्, किमिदमुक्तिवैचित्र्यम् ? उक्तिर्हि वाच्यविशेषप्रतिपादनवचनम्, तद्वैचित्र्येण कथं न वाच्यवैचित्र्यम् ? वाच्यवाचकयोरविनाभावेन प्रवृत्तेः । वाच्यानां च काव्ये प्रतिभासमानानां यद्रूपं, तत्तु ग्राह्यविशेषाभेदेनैव प्रतीयते । तेनोक्तिवैचित्र्यवादिना वाच्यवैचित्र्यमनिच्छताऽप्यवश्यमभ्युपगन्तव्यम् ।**

प्रतिपाद्यते बोध्यतेऽनेनेति प्रतिपादनं, तादृशं च तद्वचनमितिकर्मधारयः । तद्वैचित्र्येण वाचकात्मिकाया उक्ते वैचित्र्येण । अविनाभावेन प्रवृत्तेश्शब्दार्थयोस्तादात्म्येन शब्दं विनाऽर्थस्यासत्त्वात् । ग्राह्यः प्रत्यक्षादिप्रमाणै र्निर्णीततया बोध्यो यो विशेषः सामान्यातिरिक्तउक्तस्वरूप स्तस्य योऽभेदस्तादात्म्यं, तेनैव काव्ये वाच्यं वाच्यसामान्यं प्रतीयत इति सम्बन्धः । तेनेत्यादिना फलितकथनम् ।

इदमुच्यते—नह्युक्तिवैचित्र्यमात्रेणार्वाचीनकविकाव्यानामपूर्वत्वम्, वाच्यवाचकयोरभेदेन वाचकवैचित्र्यस्थले वाच्यवैचित्र्यस्याप्यवश्यम्भावेन प्रतिनियतवाच्यवैचित्र्यस्यैव तदपूर्वतामूलत्वेनाभ्युपगन्तुमौचित्यात्, केवलवाचकवैचित्र्यस्य त्वसम्भवात्, सम्भवेऽपि तदपेक्षयाऽकिञ्चित्करत्वाच्च । किञ्च काव्यघटकपदानां वाच्य-

सामान्ये शक्तावपि सामान्यविशेषयो रुक्तरीत्या तादात्म्याद् विशेषप्रत्यायकता ऽस्त्येवेति न प्रकृतेऽनुपपत्तिरिति विभावनीयम् ।

पर्यवसितं समासेनोपदिशति—

तदयमत्र सङ्क्षेपः—'वाल्मीकिव्यतिरिक्तस्य यद्येकस्यापि कस्यचित् ।
इष्यते प्रतिभाऽऽनन्त्यं तत्तदाऽऽनन्त्यमक्षतम् ॥'

यदि वाल्मीकेर्व्यतिरिक्तस्य भिन्नस्य, कस्यचिदेकस्यापि कवेः, प्रतिभायास्तत्प्रयोज्यवर्णनविषयार्थसम्पत्ते रानन्त्यमनवधित्वम्, इष्यतेऽभिलष्यते । तत्तदा तदानन्त्यं सर्वेषां नूतनकवीनामर्थनिष्ठमानन्त्यम्, अक्षतं नियतमित्यर्थः । तुल्यन्यायादन्येषामपि कवीनां तदानन्त्यं मन्तव्यमेव भवेदितिभावः ।

परपक्षमभ्युपगत्यापि स्वपक्षं स्थापयति—

किञ्च—उक्तिवैचित्र्यं यत् काव्यनवत्वेन निबन्धनमुच्यते, तदस्मत्पक्षानुगुणमेव, यतो यावानयं काव्यानन्त्यभेदहेतुः प्रकारः प्राग्दर्शितः, स सर्व एव पुनरुक्तिवैचित्र्याद् द्विगुणतामापद्यते ।

'काव्यनवत्वे निबन्धनम्' इति पाठनीयम्, यथाश्रुते तु तृतीयाऽर्थस्यानन्वयो दुष्परिहरः । एवं 'काव्यानन्तभेदहेतुः' इति 'काव्यभेदानन्त्यहेतुः' इति वा सुपठम्, आनन्त्य-भेदयोरभेदेनान्वयासम्भवात् । अभिनिवेशे तु-काव्यानां तत्प्रतिपाद्यार्थानां चानन्त्ये भेदे च हेतुरवस्थाभेदादिरिति द्वन्द्वगर्भतत्पुरुषेण कथंचिद्योजनीयम् ।

अवस्थाऽऽदिभेदै र्भिन्ना अपि काव्यार्थाउक्तिवैचित्र्यसहकारेण विपुलीभवन्तो नितरां शोभन्ते, शब्दार्थयो र्द्वयोरपि चमत्कारित्वात् । अत्रैव कुन्तलसिद्धान्तोऽन्तर्भवतीति बोध्यम् ।

उक्तिवैचित्र्यस्यार्थानन्त्यहेतुतां समर्थयति—

यश्चायमुपमाश्लेषादिरलङ्कारमार्गः प्रसिद्धः, स भणितिवैचित्र्यादुपनिबध्यमानः स्वयमेवानवधिर्धत्ते शतशाखताम् ।

भणितिरुक्तिः । अनवधिर्निस्सीमः, अलङ्काराणां संसृष्टिसङ्करयोगेनामितप्रकारत्वात् । शतशाखतामनन्तप्रकारताम् ।

उपमाप्रभृतयो येऽमी वाच्यलङ्कारा स्ते स्वतोविविधाकाराअपि, भणितिवैचित्र्येणोपादीयमाना अनन्तप्रकारान् भजन्ति । तथाहि—एकमेवोपमानं निभप्रतिमप्रतिबिम्बतुल्यसमानसदृशाभासनीकाशसब्रह्मचारिसोदरप्रतिच्छायादिभि रनेकाभि भणि-

तिभि विंचित्राभि रुपादीयमानं विचित्रतां प्राप्नोतीति स्फुटमेवोक्तिवैचित्र्यस्यालङ्कार-वैचित्र्यसम्पादनद्वारकार्थवैचित्र्यसम्पाकत्वम् ।

पुनरपरथा तदेव दर्शयति—

**भणितिश्च भाषाभेदेन व्यवस्थिता सती, प्रतिनियतभाषागोचरार्थवैचित्र्यनिबन्धनं पुनरपरं काव्यार्थानामानन्त्यमापादयति ।**

भाषाभेदेन व्यवस्थिता विभिन्ना सती भणितिश्च पुनः कर्त्री प्रतिनियताया स्तत्तया निश्चिताया भाषाया गोचरेण तज्जन्यबोधविषयीभूतेन वाच्येन कृतं सम्पादितं वैचित्र्यमेव निबन्धनं निमित्तं यस्य, तादृशं पुनरपरं काव्यार्थानामानन्त्यं कर्मीभूतमापादयति करोतीत्यर्थः ।

प्रतिभाषं खलु भिन्नभिन्नतया विचित्रैव भवति भणितिरिति प्रसिद्धमेव । तच्च-भणितिवैचित्र्यमर्थवैचित्र्यस्यापि बोधद्वारा निमित्तीभवत् सत् काव्येऽलङ्काराणां तदितरार्थानां चानन्त्यं सम्पादयतीतिसारम् ।

सन्दर्भसङ्गतये 'कथाभेदेन' इति पाठं विहाय 'भाषाभेदेन' इति पाठोऽङ्गीकृतः ।

तदेवोदाहरति—

यथा ममैव—

'महमह इन्ति भणिन्तउ वच्चइ कालो जणस्स तेइ ॥
ण देआ जाणद्दणो गाअरो होदि मणसो महुमहणो ॥'

'मम ममेति भणतो व्रजति कालोजनस्य तथाऽपि ॥
न देवो जनार्दनो गोचरो भवति मनसो मधुमथनः ॥' इति च्छाया ।

यद्यपि मम जनार्दनोममजनार्दन इति भणतः कथयतो जनस्य कालो व्रजति निर्गच्छति, तथाऽपि देवो भगवान् मधुमथनो मधुसूदनो जनार्दनः तस्य मनसो गोचरो बुद्धिविषयो न भवतीत्याश्चर्यमित्यर्थः ।

इहानुपलं मम ममेति भणतोऽपि जनार्दनः कथं बुद्धिविषयो न भवतीतिप्रतीयमानां विरोधालङ्कारच्छायां 'महमह' इति सैन्धवभाषामयी भणितिर्विचित्रीकरोतीति भाषाभेदविभिन्नभणितिवैचित्र्यस्यालङ्काराद्यर्थवैचित्र्यसम्पादकत्वं व्यक्तम् ।

अस्फुटेयं गाथा कथिता कैश्चित् । अस्माभिः पुनर्लोचनदर्शितच्छायाऽनुसारं कथंचित् स्फुटीकृता ।

उपसंहरति—

**इत्थं यथा यथा निरूप्यते, तथा तथा न लभ्यतेऽन्तः काव्यार्थानाम् ।**

इत्थमनया रीत्या, यथा यथा येन येनावस्थाभेदभिन्नत्वादिना प्रकारेण निरूप्यते, तथा तथा काव्यार्थानां काव्याभिधेयानामन्तो न लभ्यते, किन्तु काव्यार्था अनन्ता एव भवन्तीत्यर्थः ।

वीप्साद्वयेन प्रकाराणां बाहुल्यमर्थानां च नियमेनानन्त्यमिति सूच्यते ।

किं तर्हि वाच्यवैचित्र्यमेव मुख्यम् ? इत्यत आह—

इदन्तूच्यते—

**'अवस्थाऽऽदिविभिन्नानां वाच्यार्थानां निबन्धनम् ।'**

व्याख्यास्यतेऽनुपदमिदं पूर्णायां कारिकायाम् ।

किमिदमवस्थाऽऽदिविभिन्नत्वमित्याकाङ्क्षायामन्तरैवाभिधत्ते वृत्तिकारः—

यत् प्रदर्शितं प्राक् ।

'अवस्थादेशकालादिविशेषैः' इत्यादिकारिकयाऽत्रैवोद्द्योते ।

कारिकां पूरयति—

**'भूम्नैव दृश्यते लक्ष्ये न तच्छक्यमपोहितुम् ॥११२॥'**

अवस्थाऽऽदिभिः प्रागुक्तैर्विभिन्नानां वाच्यार्थानां निबन्धनं योजनं लक्ष्ये भूम्ना बाहुल्येनैव दृश्यते, तस्माद् बहुलप्रचारं तत् तादृशार्थनिबन्धनम्, अपोहितुं पृथक् कर्तुं न शक्यमित्यर्थः ।

एतेन, अवतरणवाक्यघटकतुशब्दद्योत्यारुचिनिदानमस्यानुपादेयत्वं व्यक्तीकृतम्, तत्तु समीचीनं नास्ति, किन्त्वशक्यापोहमिति कथञ्चिन्मृष्यत इति कारिकातात्पर्यावधारणात् ।

तत्सम्यक्त्वाय क उपायः ? इति जिज्ञासायामाचष्टे—

**तत्तु भातिरसाश्रयात् ।**

तुशब्दोऽप्यर्थकः । तदपि तादृशवाच्यनिबन्धनमपि रसाश्रयाद्रसव्यञ्जनाद् भाति छायामासादयतीत्यर्थः । एतच्च कारिकातुरीयचरणतात्पर्यगोचरीभूतम् ।

उपसंहरन्नुक्तार्थं द्रढयति—

**तदिदमत्र सङ्क्षेपेणाभिधीयते सत्कवीनामुपदेशाय—**

तेन न पौनरुक्त्याक्षेपः सम्भवति ।

**'रसभावादिसम्बद्धा यथौचित्यानुसारिणी ।**

**अन्वीयते वस्तुगतिः देशकालादिभेदिनी ॥ ११३ ॥'**

अस्या अग्रिमकारिकया सहैकवाक्यतयैव वाक्यार्थबोध इति तत्रैव व्याख्यास्यामः ।

कारिकाद्वयानुषक्तमनुक्तमंशं वृत्तिकृदाह—

का गणना कवीनामन्येषां परिमितशक्तीनाम् ?—

**'वाचस्पतिसहस्राणां सहस्रैरपि यत्नतः ।**

**निबद्धाऽपि क्षयं नैति प्रकृतिर्जगतामिव ॥ ११४ ॥'**

यदि रसभावादिसम्बद्धा रसाद्यव्यञ्जिका, औचित्यानुसारिणी—औचित्येन निबद्धा, देशकालादिभेदेन भिन्ना, वस्तुगतिर्विपुलीभूता वाच्यततिः, अन्वीयते कविभिरुपनिवेश्यते, तदा परिमितशक्तीनामल्पप्रतिभाजुषामाधुनिककवीनां का गणना ?, वाचस्पतेः स्वयं बृहस्पतेः सहस्राणां सहस्रैरपि यत्नतः प्रयासान्निबद्धाऽपि सा, जगतां प्रकृतिरिव वैभवी विश्वविरचनशक्तिरिव, क्षयमवसानं नैति न प्राप्नोतीत्यर्थः ।

तादृशवस्तुनिबन्धनेऽर्थानन्त्यं भवत्येवेति तत्र रसादिसम्बन्ध औचित्यानुरोधश्च नितरामपेक्ष्य इत्यभिसन्धिः ।

इह सहस्रशब्दाद् बहुवचनस्य प्रयोगे—'विंशत्याद्याः सदैकत्वे सर्वाः सङ्ख्येयसङ्ख्ययोः' इत्यनुशासनविरोधपरिहारोपायश्चिन्तनीयः ।

विवृणोति वृत्तिकारः—

यथा हि—जगत्प्रकृतिरतीतकल्पपरम्पराऽऽविर्भूतविचित्रवस्तुप्रपञ्चा सती, पुनरिदानीं परिक्षीणा पदार्थनिर्माणशक्तिरिति न शक्यतेऽभिधातुम्, तद्वदेवेयं काव्यस्थितिरनन्ताभिः कविमतिभिरुपभुक्ताऽपि, नेदानीं परिहीयते, प्रत्युत नवनवाभिर्व्युत्पत्तिभिः परिवर्धते ।

प्रकृतिः प्रधानाख्या सत्त्वरजस्तमसां साम्यावस्था, ऐशी शक्तिर्वा । अतीता विगताः याः कल्पानां संवर्तानां परम्पराः, ताभिस्तासु वाऽऽविर्भूतः प्रकटित उत्पन्नो वा, विचित्रो नैकविधो वस्तूनां पदार्थानां प्रपञ्चो विस्तरो यत्र तादृशी । काव्यानां स्थितिर्मर्यादाऽर्थपरम्परेति यावत् । उपभुक्ता निर्माणोपयोगित्वेन गोचरीकृता ।

ननु तर्हि क्वचित् कविद्वयरचनयोः संवादो दृश्यमानः कथमुपपद्यतामित्यत आह—

इत्थं स्थितेऽपि—

**'संवादास्तु भवन्त्येव बाहुल्येन सुमेधसाम् ॥'**

द्वितीयार्धेनैकवाक्यतया व्याख्यास्यते ।

वृत्तिकृत् कारिकाऽनुक्तमप्यपेक्षितमंशमाचष्टे—

**स्थितं ह्येतत्—संवादिन्यो मेधाविनां बुद्धयः ।**

मेधाविनां सुबुद्धीनां बुद्धयः संवादिन्यः समानविषयकपरामर्शभाजो भवन्तीत्येतद्धि स्थितं निर्णीतमित्यर्थः ।

विशेषमभिधातुं कारिकोत्तरार्धमवतारयति—

**किन्तु—**

**'नैकरूपतया सर्वे ते मन्तव्या विपश्चिता ॥ ११५ ॥'**

सुमेधसां कवीनां काव्ये संवादाइतरसादृश्यरूपास्तु बाहुल्येन भवन्त्येवेति न चित्रम् । यतो मेधाविनां बुद्धयः संवादिन्यो भवन्ति । किन्तु ते सर्वे संवादा एकरूपतया–एकाकारत्वेन विपश्चिता विदुषा न मन्तव्या इत्यर्थः ।

अज्ञातपरस्पररचनमपि विलक्षणप्रातिभं कविद्वयमेकविषयं विवर्णयिषु कदाचित् सदृशमेव काव्यं रचयेदिति नाश्चर्यम् । किन्तु तत्सादृश्यं वक्ष्यमाणक्रमेण नानाविधमिति तत्र सर्वे प्रकारा नैकरूपा न च मर्षणीया वा भवन्तीति तात्पर्यम् ।

कुतस्ते संवादा ऐकरूप्येण न मान्या इत्याशङ्क्य, तत्स्वरूपव्याक्रिययैव समाधातुं कारिकामवतारयति —

**कथमिति चेत् ?—**

संवादस्वरूप–प्रकारान्निरूपयति—

**'संवादो ह्यन्यसादृश्यं, तत् पुनः प्रतिबिम्बवत् ।**
**आलेख्याकारवत् तुल्यदेहिवच्च शरीरिणाम् ॥ ११६ ॥**

अन्येन काव्यार्थेन सादृश्यं समानाकारत्वं काव्यार्थस्य संवाद इत्युच्यते । तदन्यसादृश्यं काव्यार्थस्य पुनः शरीरिणां जीवानां प्रतिबिम्बवद् दर्पणपतितप्रतिच्छायतुल्यमेकम्, तेषामालेख्यं भित्त्यादौ लिखितं चित्रं, तत्प्रख्यं तत्सदृशं पुनर्द्वितीयम्, तेषामेव तुल्यः स्वसदृशोऽन्यो यो देही, तद्वच्च तृतीयमिति त्रिविधं भवतीत्यर्थः ।

प्रथमचरणेन लक्षणम्, तदितरचरणैस्तु विभागोऽत्र प्रतिपाद्यते। शरीरिणा-मित्यस्य प्रतिवाक्यं सम्बन्धः।

यथा हि—देहिनां दर्पणादिपतितप्रतिबिम्बे, भित्त्यादिलिखितचित्रे, समानाकारक-व्यक्त्यन्तरे च सादृश्यं त्रिविधं भवति, तथैव काव्यार्थानामिति सारम्।

तदाह—

संवादो हि काव्यार्थस्योच्यते यदन्येन काव्यवस्तुना सादृश्यम्। तत् पुनः शरीरिणां प्रतिबिम्बवदालेख्याकारवत् तुल्यदेहिवच्च त्रिधा व्यवस्थितम्। किञ्चिद्धि काव्यवस्तु वस्त्वन्तरस्य शरीरिणः प्रतिबिम्बः प्रतिबिम्बकल्पम्, अन्यदालेख्यप्रख्यम्, अन्यत् तुल्येन शरीरिणा सदृशम्।

नन्वेतेनोक्तशङ्कायाः समाधिः कथमिति जिज्ञासायामाख्याति—

'तत्र पूर्वमनन्यात्म तुच्छात्म तदनन्तरम्।
तृतीयं तु प्रसिद्धात्म नान्यसाम्यं त्यजेत् कविः॥ ११७॥'

कविः—तत्र तेष्वन्यसादृश्येषु पूर्वं प्रथमं प्रतिबिम्बतुल्यम्, अविद्यमानोऽन्यः पूर्वनिबद्धातिरिक्त आत्मा स्वरूपं यस्य तादृशं यद् भवति, तत्परिहरेदिति शेषः। तदनन्तरं द्वितीयमालेख्यप्रख्यं यत् तुच्छः शून्य आत्मा यस्य तथाविधम् भवति, तदपि परिहरेदेव, असत्त्वात्। तृतीयं तु पुनस्तुल्यदेहिवत् प्रसिद्धिः काव्येषु प्रख्यात आत्मा यस्य तादृग् यद् भवति, तदन्यसाम्यं सादृश्यं कमनीयतया प्रसिद्धत्वान्न त्यजेन्न परिहरेदित्यर्थः।

तदाह—

तत्र पूर्वं प्रतिबिम्बकल्पं काव्यवस्तु परिहर्तव्यं सुमतिना, यत स्तदनन्यात्म तात्त्विकशरीरशून्यम्। तदनन्तर मालेख्यप्रख्यमन्यसाम्यं शरीरान्तरयुक्तमपि, तुच्छात्मत्वेन त्यक्तव्यम्। तृतीयं तु कमनीयं शरीरसद्भावे सति ससंवादमपि काव्यवस्तु न त्यक्तव्यं कविना। नहि शरीरी शरीरिणाऽन्येन सदृशोऽप्येक एवेति शक्यते वक्तुम्।

प्रतिबिम्बं हि च्छायामात्रं वास्तविकाकारशून्यत्वादसत्। आलेख्यमपि तुरगाद्यनुकार्यमात्रबुद्धिकृत्, न तु रञ्जनसाधनीभूतद्रव्यप्रत्यायक मित्यसदेव। अन्यदेहसादृश्यं तु सदृशयोरपि द्वयोःसर्वथैक्यप्रतीतेरप्रसिद्धेःकमनीयतमत्वाच्च सत्स्वरूपं नैव त्यक्तव्यमित्यर्थः।

संवादविभागनिरूपणेनामुना कुतो न संवादानामैकरूप्यमिति शङ्का निरस्ता ।

कारिकाऽन्तरमवतारयति—

**एतदेवोपपादयितुमुच्यते—**

एतत् तृतीयसंवादस्यात्याज्यत्वम् ।

**'तत्त्वस्यान्यस्य सद्भावे पूर्वस्थित्यनुयाय्यपि ॥**
**वस्तु भातितरां तन्व्याः शशिच्छायमिवाननम् ॥ ११८ ॥'**

अन्यस्य प्रसिद्धवाच्यादिविलक्षणस्य, तत्त्वस्य व्यङ्ग्यरसादिरूपस्य सारतयाऽऽत्मनः सद्भावे सति, पूर्वस्थितेः प्राचीनकविवर्णितार्थततेः, अनुयायि तुल्यमपि, वस्तु नवीनकविकाव्यप्रतिपाद्यं, सारभूतलावण्यसद्भावे, तन्व्या ललनायाः, शशिच्छायं चन्द्रकान्ति, आननमिव भातितराम् , न तु पौनरुक्त्येन दुष्टं प्रतीतं भवतीत्यर्थः ।

यथा हि ललनाया मुखं चन्द्रतुल्यमपि सारभूतलावण्यसद्भावेन नितरां शोभत एव, न तु तुच्छतया प्रतीतं भवति, तथैव प्राचीनकाव्यार्थसंवादभागपि नवीनकाव्यप्रतिपाद्यार्थो रसादिव्यङ्ग्यसद्भावेन शोभत एव, नतु पुनरुक्तत्वेन प्रतीतं भवतीति सारम् ।

तदाह—

**तत्त्वस्य सारभूतस्यात्मनः सद्भावे ऽन्यस्य, पूर्वस्थित्यनुयाय्यपि वस्तु, भातितराम् । पुराणरमणीयच्छायाऽनुगृहीतं हि वस्तु शरीरवत् परां शोभां पुष्यति, न तु पुनरुक्तत्वेनावभासते । तन्व्याः शशिच्छायमिवाननम् ।**

इत्थं वाक्यार्थसादृश्येषु ग्राह्याग्राह्यविवेकं विधाय पदार्थसादृश्ये ग्राह्यत्वं वक्तुं कारिकामवतारयति—

**एवं तावत् ससंवादानां वाक्यवेदितानां काव्यार्थानां विभक्ताः सीमानः । पदार्थरूपाणां च वस्त्वन्तरसदृशानां काव्यवस्तूनां नास्त्येव दोष इति प्रतिपादयितुमुच्यते—**

संवादेनेतरसादृश्येन सहिताः ससंवादास्तेषाम् । वाक्येन वेदितानां बोधितानां वाक्यार्थानामिति यावत् । सीमानोऽवधयः । दोषः पूर्वसम्वादात् पौनरुक्त्यलक्षणः ।

**'अक्षरादिरचनेव योज्यते यत्र वस्तुरचना पुरातनी ॥**
**नूतने स्फुरति काव्यवस्तुनि व्यक्तमेव खलु सा न दुष्यति११६॥'**

यत्र यस्मिन् प्रबन्धे, नूतने प्रत्यग्रतयाऽभिरामे, काव्यवस्तुनि काव्यार्थे, स्फुरति विराजति सति, अक्षराणां वर्णानाम्, आदिशब्दात् पदानां च या रचना, सेव, पुरातनी प्राचीनकविपरम्परानिबद्धा, वस्तुरचना पदार्थरचना, योज्यते निबध्यते, सा तादृशवस्तुरचना, न दुष्यति नैव दुष्टा भवतीत्यर्थः ।

तदेव विशदीकरोति वृत्तिकारः—

**नहि वाचस्पतिनाऽप्यक्षराणि पदानि वा कानिचिदपूर्वाणि घटयितुं शक्यन्ते । तानि तान्येवोपनिबद्धानि न काव्यादिषु नवतां विरुध्यन्ति, तथैव पदार्थरूपाणि श्लेषादिमयान्यर्थतत्त्वानि ।**

अपूर्वाणि प्रसिद्धेभ्योऽकारादिवर्णेभ्यो घटादिपदेभ्यो वाऽन्यानि स्वोपात्तरूपाणि । तानि तानि पूर्वप्रसिद्धानि । नवतां तेषामपूर्वत्वं न विरुध्यन्ति नैव प्रतिबध्नन्ति दैवादिकरुधधातोरूपमिदम् । पदार्थरूपाण्यपूर्वाणि न घटयितुं शक्यन्त इति पूर्ववत्सम्बन्धः । श्लेषादिमयानीति स्वरूपे प्राचुर्ये वा मयट् । अर्थतत्त्वान्यर्थाः ।

यथा विदुषां प्रधानतमेनापि बृहस्पतिना ऽक्षराणि पदानि वा ऽपूर्वाणि वाक्ये योजयितुं न कथमपि प्रभूयते, किमु वक्तव्यमाधुनिकानां बुधानाम् ?, तथैवेदानीन्तनैः कविभिरपि प्राचीनकविपरम्परयाऽस्पृष्टान् पदार्थान् स्वकाव्ये सन्निवेशयितुं न क्षम्यते । तथाहि—श्लेषघटनाय गुण–बाण–शिलीमुख–हरि–कौशिक–विष कमल–तेजो–द्विजादिशब्दाः प्राचीनैः प्रयुक्ताएव प्रयुज्यन्ते । मुखस्य चन्द्रकमलाभ्यां, स्तनयो गिरिकलशाभ्यां, केशानां कलापतिमिराभ्यां सहोपमानेपमेयभावश्च पूर्वप्रसिद्ध एवोपनिबध्यते । तावताऽपि तेषामपूर्वत्वंतु न व्याहन्यते, यतस्तत्र काव्यार्थवैचित्र्यनिदानं रसादिव्यङ्ग्यं स्फुरति । यत्र तु न भवति तत्स्फुरणम्, तत्रापूर्वत्वं तेषां व्याहन्यत एवेत्याशयः ।

उपसंहरति—

**तस्मात्—**

उक्तहेतोः ।

'यदपि तदपि रम्यं यत्र लोकस्य किञ्चित्,
स्फुरितमिदमितीयं बुद्धिरभ्युज्जिहीते ।
अनुगतमपि पूर्वच्छायया वस्तु तादृक्,
सुकविरुपनिबध्नन् निन्द्यतां नोपयाति ॥ १२० ॥

यत्र यस्मिन् काव्यवस्तुनि काव्यार्थे यद्विषयिकेति यावत्, लोकस्य सहृदयसमुदयस्य, स्फुरितं स्फुरणं 'नवीनार्थविजृम्भणमिदम्' इतीयमिदमाकारा, बुद्धि श्चमत्कृतिसंवित्, अभ्युज्जिहीत उत्पद्यते । तादृक् यदपि तदपियत् किञ्चिदपि विशेषेणाविविक्तमपि, रम्यं रमणीयं विवक्षितव्यङ्ग्यप्रकाशकत्वेन सुन्दरम्, वस्त्वर्थतत्त्वं, पूर्वच्छायया दर्शितक्रमेण प्राचीनकविवर्णितार्थसदृशतया, अनुगतं युक्तमपि, उपनिबध्नन् स्वप्रबन्धे योजयन् सुकविः, निन्द्यतामुपहसनीयतां, नोपयाति न प्राप्नोतीत्यर्थः ।

चमत्कृतिमूलभूतविवक्षितव्यङ्ग्यप्रकाशनसामर्थ्यसद्भावे पूर्वानुसारि पदार्थतत्त्वमपि प्रबन्धे कविना सङ्घटितं सहृदयै श्चमत्कारकतया ज्ञायमानं तस्य यस्य यशः स एव सम्पद्यत इति भावः ।

यदपि तदपि रम्यं काव्यशरीरं यल्लोकस्य किञ्चित् स्फुरित मिदमितीयं बुद्धिरभ्युज्जिहीते, स्फुरणेयं काचिदिति सहृदयानां चमत्कृतिरुत्पद्यते । तदनुगत मपि पूर्वच्छायय वस्तु तादृक्, सुकविर्विवक्षितव्यङ्ग्यवाच्यार्थसमर्पणसमर्थशब्दरचनारूपया बन्धच्छाययोपनिबध्नन् निन्द्यतां नैव याति ।

काव्यशरीरं वाक्यलक्षणम् । स्फुरणेयं काचिदिति बुद्धेराकारबोधकम् । लोकस्येत्यस्य सहृदयानामिति विवरणम्, अन्यथा तदुक्तिविफलताऽऽपत्तिः । एवं बुद्धिरित्यस्य चमत्कृतिरिति, अभ्युज्जिहीत इत्यस्योत्पद्य इति व्याख्यानम्, किन्तु बुद्धिश्चमत्कृतिजनिकेति विशेषः । विवक्षितो व्यङ्ग्यो यत्र तादृशो यो वाच्योऽर्थ स्तस्य समर्पणे बोधने समर्थस्य शक्तस्य शब्दस्य या रचना सैव रूपं यस्या स्तयेति व्युत्पत्तिः ।

प्रबन्धमुपसहरन्नुपदिशति--

तदित्थं स्थिते—

विवक्षितव्यङ्ग्यसङ्गेन पूर्वार्थसाम्यस्याप्यदूषकत्वे निर्धारिते सतीत्यर्थः ।

'प्रतायन्तां वाचो निमितविविधार्थामृतरसा,
न वादः कर्तव्यः कविभिरनवद्ये स्वविषये ।

**परस्वादानेच्छाविरतमनसो वस्तु सुकवेः,**
**सरस्वत्येवैषा घटयति यथेष्टं भगवती ॥ १२१ ॥**

कविभिः कर्तृभिः, निमितो नितरां मितः प्रकटितो निरूपितः परिच्छिन्नो वा विविधाना मनेकप्रकारकाणा मर्थानाममृतमिव समास्वाद्यो रसो यासु याभिर्वा, तादृश्यो वाचः काव्यवाक्यानि, प्रतायन्तां विस्तार्यन्तां निर्म्मीयन्तामिति यावत् । अत एव तैः, अनवद्ये निर्दूषणे, स्वविषये स्वीयतात्कालिकस्फूर्तिविषये वस्तुनि, वादो विवादो वितर्को वा न कर्तव्यः, अपि तु तद्वस्तूपादेयमेव । न तु पुनः सर्वैः परच्छायाऽनुसरणीयैवेति नियमः—यतः परेषां प्राचीनाना मन्येषां कवीनां, स्वस्य सारतया धनरूपस्य, तादृशवस्तुन आदानस्य छायारूपेण ग्रहणस्य, इच्छया विरतं निवृत्तं मनोयस्य तादृशः सुकवेः प्रतिपिपादयिषितं वस्त्वर्थतत्त्वम् , एषा सकलसत्कविमनोगोचरीभूता, भगवती विचित्रैश्वर्यशालिनी, सरस्वती वाग्देवतैव, न तु स्वयं सः, यथेष्टमिच्छाऽनुरूपं, घटयति योजयति सृजतीतिवाऽर्थः ।

प्राचीनार्थसंस्पर्श्यपि चमत्कृतिजनकार्थव्यञ्जनसमर्थमर्थतत्त्वं काव्ये निवेशयतोऽपि नवीनकवेरुपहास्यता न भवतीति निश्चिते सति, तादृशार्थनिवेशे नूतनकवीनां स्वाच्छन्द्यम् । किन्तु ये पुनस्तत्र मनस्विनो जन्मान्तराचरितप्रचुरपुण्यसम्भाराविर्भूतविलक्षणप्रतिभाः कवयितारः, परार्थच्छाया मप्यजिघृक्षवः, तेषां काव्यार्थयोजनासम्पत्ति र्वाग्देवता प्रसादादेवानिर्वचनीया सम्पद्यत इति तत्रैव यतनीयमितितात्पर्यम् ।

सारत्वात् कारिकोत्तरार्धमात्रं व्याचष्टे—

'सन्ति नवाः काव्यार्थाः, परोपनिबद्धार्थविरचने न कश्चित् कवेर्गुणः' इति भावयित्वा परस्वादानेच्छाविरतमनसः सुकवेः सरस्वत्येषा भगवतो यथेष्टं घटयति वस्तु । येषां सुकृतीनां कवीनां प्राक्तनपुण्याभ्यासपरिपाकवशेन प्रवृत्तिः, तेषां परोपरचितार्थपरिग्रहनिस्पृहाणां स्वव्यापारो न कचिदुपयुज्यते सैव भगवती सरस्वती स्वयमभिमत मर्थ माविर्भावयति, एतदेव हि महाकवित्वं महाकवीनामित्योम् ।

गुण इत्यन्तो भागो भावनाविषयार्थपरामर्शकः । तादृशभावनैव तदिच्छाविरतमनस्त्वे मूलम् । शोभना कृति र्येषा मिति विग्रहः । कारिकायां छन्दोऽनुरोधेन

कवेरिति जात्यभिप्रायकमेवैकवचनम् । अतएव वृत्तौ कवीनामिति विवरणम् । प्राक्तनानां पूर्वजन्मार्जितानां पुण्यानां सुकृतानामभ्यासस्य पौनःपुन्येन प्रवृत्तेः परम्पराया वा परिपाकस्य परिणामस्य वशेन बलेन । स्वव्यापार स्तत्कविव्यापारो नोपयुज्यते नापेक्ष्यते । आविर्भावयतीति घटयतीत्यस्य विवृतिः । एतदेव तादृशायोन्यर्थनिवेशनमेव, हि यस्मान्महाकवित्वम्, तस्मात्तत्रैव यतनीयम् । इतिशब्दः कारिकाग्रन्थसमाप्तिसूचकः । ओङ्कारो ग्रन्थान्ते मङ्गलार्थकः ।

तदुक्तम्—

'ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥' इति ।

वृत्तिकारः प्रक्रान्तं प्रबन्धमुपसंहरन्नाशीर्वादात्मकं मङ्गलमन्ते निबध्नाति—

**निप्याक्लिष्टरसाश्रयोचितगुणालङ्कारशोभाभृतो,**
**यस्माद्वस्तु समीहितं सुकृतिभिः सर्वं समासाद्यते ॥**
**काव्याख्येऽखिलसौख्यधाम्नि विबुधोद्याने ध्वनिर्दर्शितः,**
**सोऽयं कल्पतरूपमानमहिमा भोग्योऽस्तु भव्यात्मनाम् ॥**

नित्यमत्यन्तं सर्वदा वाऽक्लिष्टा-अनतिगूढा निर्दूषणा वा, रसानां शृङ्गारादीनामाश्रयेणाश्रयणेन पोषणेनेति यावद्, उचिता युक्ताश्च ये गुणालङ्कारा माधुर्यप्रमुखोपमाऽऽदयस्तैस्तत्कृतां शोभां विच्छित्तिं बिभर्तीति तादृक्, तस्मात्, पक्षान्तरे-नित्यं प्रत्यहम्, अक्लिष्टोऽपुरातनोऽनुपभुक्त इति यावद्,यो रसो मकरन्दस्तदाश्रयस्तन्निमित्तको यो गुणानां कोमलत्वसौरभप्रभृतीनामलङ्कारपरिपोषस्तेन या शोभा श्रीस्तां बिभ्रतः, यस्मात् काव्यादुद्यानाच्च, सुकृतिभिः प्राचीनपुण्यपरम्पराप्रकटितवासनायुगुलसनाथहृदयैः, पक्षान्तरे–सुविहितज्योतिष्टोमप्रमुखस्वर्गसाधनैः, सर्वमशेषं समीहितमभिलषितं कीर्तिचतुर्वर्गप्रभृति, पक्षान्तरे—कुसुमफलादिमधुसौरभं वसनाभरणादि वा, समासाद्यते सम्यक् प्राप्यते । तादृशेऽखिलानां समस्तानां सौख्यानामखण्डचिन्मयानन्दास्वादानां, पक्षान्तरे–दुःखासम्भिन्नस्वच्छन्दविहरणजन्याह्लादानां, धाम्नि प्रकाशकत्वादाश्रये, पक्षान्तरे–तज्जनकत्वादायतने, काव्याख्ये काव्यनाम्ना प्रसिद्धे, विबुधानां सहृदयानामुद्याने तद्वदानन्ददायकत्वादारामे, पक्षान्तरे–दिवौकसामुद्याने नन्दने, ध्वनिरुक्तस्वरूपो वस्तुविशेषः, पक्षान्तरे-

षट्पदादिस्वनविशेषः, मयाऽस्मिन् ग्रन्थे दर्शितस्तेषां भोगाय यः प्रकाशितः, सोऽयं ध्वनिः कल्पतरुणा देववृक्षेण सर्वाभीष्टसमर्पकत्वादुपमानं साम्यं यस्य, तादृशो महिमा महत्त्वं यस्य तादृशः, भव्यात्मनां भाग्यवतां सहृदयानां पुण्यात्मनां च भोग्य आस्वादयोऽस्त्वित्यर्थः।

तथा च—'नित्यं स्यात् सन्तते ऽपि च। शाश्वते त्रिषु' इति 'रसो गन्धरसे जले। शृङ्गारादौ विषे वीर्ये तिक्तादौ द्रवरागयोः। देहधातुप्रभेदे च पारदस्वादयोः पुमान्' इति च मेदिनी।

अतः परमुपक्षिप्तानुबन्धचतुष्टयघटकसम्बन्धाभिधेयप्रयोजनावश्यकप्रतिपादनमुपसंहरन् प्रतिपाद्यप्रतिपादकाप्रतिबद्धप्रवृत्त्यौपयिकीभूतं प्रबन्धावसाने स्वनाम सङ्कीर्तयति—

सत्काव्यतत्त्वविषयं स्फुरितप्रसुप्त-
कल्पं मनस्सु परिपक्वधियां यदासीत्।
तद्व्याकरोत् सहृदयोदयलाभहेतोः,
'आनन्दवर्धन' इति प्रथिताभिधानः॥

इति श्रीमद्राजानकानन्दवर्धनाचार्यविरचिते 'ध्वन्यालोके' चतुर्थ उद्द्योतः।

सत्काव्यानां तत्त्वं प्रतिपाद्यसारमेव विषयो यस्य तादृशं, यद् ध्वनिरूपं वस्तु परिपक्वधियां भर्तृहरिप्रमुखप्रौढप्रज्ञावतां, मनस्सु, पूर्वं स्फुरितमुज्जृम्भितं पश्चात् प्रतिवादिनामसत्तर्कैः प्रसुप्तकल्पं क्षुद्रमतिपथातिक्रान्ततया तिरोहितमिवासीत्। 'आनन्दवर्धनः' इति प्रथितं विचित्रकृतिनिर्वर्तनद्वाराऽन्वर्थत्वेन प्रख्यातमभिधानं नाम यस्य सः, सहृदयानामुदयलाभहेतोरुन्नतिप्राप्तिनिमित्तं तदिदं ध्वनितत्त्वं, व्याकरोद् व्युदपादयदित्यर्थः।

मिथिलामहेन्द्रहृद्याद् 'विद्यानाथाद्' द्विजेन्द्रकुलतिलकात्॥
कुलशीलनिर्मलायां 'मायादेव्यां' समुद्भूतः॥ १॥
गुरुवर-'मार्कण्डेय'-प्रचुरकृपोन्मीलितोज्ज्वलप्रतिभः।
'बदरीनाथो' वाणी-परिचरणोज्जृम्भितप्रौढिः॥ २॥
कालेन चन्द्रिकायामस्तमितायां च लोचने शीर्णे।
आकलयितुमालोकं दीधितिमुददिद्युतद् विततताम्॥ ३॥

अङ्गेषुद्विपभू-(१८५६)मित-शाकाब्देषकुहूसुधांऽशुवारे ।
पूर्त्ति नीता दीधितिविवृतिर्भूयान्मुदे विदुषाम् ॥ ४ ॥
यत्करुणाकणिकैव प्रबन्धमेतं व्यदीधपत् ताभ्याम् ।
गोलोके विलसद्भ्यां समर्पयाम्यानतः शश्वत् ॥ ५ ॥
यत् सार्वभौमविद्या-सद्मनि साहित्यपाठनाभ्यासात् ।
अधिगतमिह तद्विवृतं विज्ञा ! विज्ञाय मोदन्ताम् ॥ ६ ॥
यदि लेशतोऽपि कांश्चिज्जात्विममुपकर्तुमञ्जसेशीत ।
इदमीयो न तदानीं फलेग्रहिः स्याद् ग्रहः किं मे ? ॥ ७ ॥
'अभिनवगुप्ताचार्य'-प्रथितपथेनैव मेऽटतः प्रायः ॥
स्खलनं क्वचित् त्वराऽऽहितमिह क्षमेरन् ध्रुवं विबुधाः ॥ ८ ॥
क्रीडत् कलिन्दकन्या-तटीकुटीरे सदा जगज्जनकम् ।
वात्सल्यशालि किञ्चिन्मिथुनं भूयो नमस्यामि ॥ ९ ॥

इति मैथिलश्रोत्रियपण्डितश्रीबदरीनाथशर्मनिर्मितायां
ध्वन्यालोकदीधितौ, चतुर्थ उद्द्योतः सम्पूर्णः ।

शुभम्भूयात् ।

सम्पूर्णोऽयं प्रबन्धः ।

* श्रीः *

# सदीधितिध्वन्यालोकस्य

## श्लोकानुक्रमणिका ।


| | | पृ० |
|---|---|---|
| **अ** | | |
| अकाण्ड एव विच्छित्ति- | (का०) | २५१ |
| अक्षरादिरचनेव योज्यते | (का०) | ४५२ |
| अक्ष्णोः स्फुटाश्रुकलु- | (दी०) | ७७ |
| अङ्कुरितः पल्लवितः | (दी०) | १४८ |
| अङ्गं बाध्योऽथ संसर्गी | (दी०) | २८३ |
| अङ्गाङ्गित्वेऽलङ्कृतीनां | (दी०) | ४१ |
| अङ्गाधिरोपितमृग- | (दी०) | ४२ |
| अङ्गेषुद्विपभूमित- | (दी०) | ४५७ |
| अचतुर्वदनो ब्रह्मा | (दी०) | ३४६ |
| अज्जाएँ पहारो णवल- | (दी०) | ५४ |
| अणत्त वच्च बालअ ! | (वृ०) | २३६ |
| अतन्द्रचन्द्राभरणा | (दी०) | १०९ |
| अतहट्ठिये वि तहसट्ठिये | (वृ०) | ४१३ |
| अत्ता एत्थ णिमज्जइ | ,, | १५ |
| अतिक्रान्तसुखाः कालाः | ,, | २३३ |
| अतो ह्यन्यतमेनापि | (का०) | ४०६ |
| अदृष्टे दर्शनोत्कण्ठा | (दी०) | ३६२ |
| अधिकारः फले स्वाम्य- | (दी०) | २७५ |
| अनध्यवसितावगाहन- | (वृ०) | ३७२ |
| अनवरतनयनजल- | ,, | १८३ |
| अन्तरैकार्थसम्बन्धः | (दी०) | २२० |

| | | पृ० |
|---|---|---|
| अनाख्येयांशभासित्वं | (वृ०) | ४०४ |
| अनिष्टस्य श्रुतिर्यद्व- | ,, | १७२ |
| अनुरागवती सन्ध्या | ,, | ३७ |
| अनुस्वानामसंलक्ष्य- | (दी०) | १०९ |
| अनुस्वानोपमात्माऽपि | (का०) | २२५ |
| अनौचित्यादृते नान्यद् | (वृ०) | २१३ |
| अपारे काव्यसंसारे | ,, | ३८२ |
| अप्राधान्यं विधेर्यत्र | (दी०) | ५८ |
| अभिनवगुप्ताचार्य- | (दी०) | ४५७ |
| अभिलाषश्चिन्तास्मृति- | (दी०) | २५९ |
| अभूताहरणं मार्गो | (दी०) | २२१ |
| अमात्यं सार्थकं वाऽपि | (दी०) | २०० |
| अमी ये दृश्यन्ते ननु | (वृ०) | ३७४ |
| अमुं कनकवर्णाभं | (दी०) | २२८ |
| अम्वा शेतेऽत्र वृद्धा | (वृ०) | १२९ |
| अयमेकपदे तया वियोगः | ,, | २३७ |
| अयं स रशनोत्कर्षी | ,, | २७१ |
| अर्थप्रकृतयः पञ्च | (दी०) | २२० |
| अर्थशक्त्युद्भवस्त्वन्यो | (का०) | १२४ |
| अर्थशक्तेरलङ्कारो | (का०) | १३४ |
| अर्थान्तरगतिः काक्वा | (का०) | ३५८ |
| अर्थान्तरे सङ्क्रमित- | (का०) | ६१ |

| | | पृ० |
|---|---|---|
| अलङ्कारान्तरव्यङ्ग्य- | (का०) | १५२ |
| अलङ्कारान्तरस्यापि- | (का०) | १३६ |
| अलङ्कृतीनां शक्ताव- | (का०) | २०९ |
| अलं स्थित्वा श्मशाने | (दी०) | २२७ |
| अलसवलितैः प्रेमार्द्रा- | (दी०) | २०२ |
| अल्पमात्रं समुद्दिष्टं | (दी०) | २७५ |
| अल्पीयसाऽपि यत्नेन | (दी०) | ४७ |
| अवतंसितमञ्जुमञ्जरे | (दी०) | १९ |
| अवधानातिशयवान् | (का०) | २९१ |
| अवसर रोअंचिअ | (वृ०) | २३४ |
| अवस्थादेशकालादि- | (का०) | ४३६ |
| अवस्थाऽऽदिविभिन्नानां | (का०) | ४४७ |
| अवस्थाः पञ्च कार्यस्य | (दी०) | २२० |
| अवान्तरार्थविच्छेदे | (दी०) | २७६ |
| अविरुद्धं तु यद्वृत्तं | (दी०) | २१० |
| अविरोधी विरोधी वा | (का०) | २७७ |
| अविवक्षितवाच्यस्य | (का०) | १६० |
| अविवक्षितवाच्यस्य | (दी०) | ३०३ |
| अव्युत्पत्तिकृतो दोषः | (वृ०) | १९१ |
| अव्युत्पत्तेरशक्तेर्वा | (का०) | १५८ |
| असंस्तुताध्वपान्थस्य | (दी०) | ४०५ |
| असंलक्ष्यक्रमोद्द्योतः | (का०) | ६७ |
| असमासा समासेन | (का०) | १८० |
| अस्पृष्टा दोषमात्राभिः | (दी०) | १८० |
| अस्फुटस्फुरितं काव्य- | (का०) | ३९९ |
| अहिणअ–पओअरसिएसु | (वृ०) | ३९७ |
| **आ** | | |
| आक्रन्दास्तनितैर्विलोचन- | (वृ०) | १०५ |
| आक्षिप्त एवालङ्कारः | (का०) | ११० |
| आख्यायिका कथावत् | (दी०) | २०० |
| आख्यायिका कथाखण्ड- | (दी०) | २०० |
| आगर्भादाविमर्शाच्च | (दी०) | २७६ |
| आदित्योऽयं स्थितो मूढाः | (दी०) | २८८ |
| आद्यन्तपद्यसय्युँक्ता | (दी०) | २०१ |
| आनम्यवल्गुवचनै- | (दी०) | ४३ |
| आपतन्तममुं दूरा- | (दी०) | १३१ |
| आबद्धकृत्रिमसटा- | (दी०) | ४४ |
| आम असइओ ओरम | (वृ०) | ३६० |
| आलोकार्थी यथादीप- | (का०) | २८ |
| आश्चर्यवदभिख्यानं | (दी०) | २२२ |
| आश्लिष्टश्लथभावां | (दी०) | १८० |
| आहूतोऽपि सहायैरेमी- | (वृ०) | ३८ |
| **इ** | | |
| इतराङ्गं व्यङ्ग्यं स्या- | (दी०) | ३४५ |
| इति काव्यार्थविवेको- | (वृ०) | २०८ |
| इतिवृत्तवशायातां | (का०) | २०९ |
| इत्याद्यशेषमिह वस्तु | (दी०) | २१४ |
| इत्युक्तलक्षणो यो | (का०) | ३९८ |
| इदं पुनर्वस्तुबुधै- | (दी०) | २७५ |
| इष्टस्यार्थस्य रचना° | (दी०) | २२२ |
| **ई** | | |
| ईसाकलुसस्स वि तुह | (वृ०) | १४५ |
| **उ** | | |
| उक्त्यन्तरेणाशक्यं यत् | (का०) | ५५ |
| उच्चिणसु पडिअ | (वृ०) | १५६ |
| उत्कम्पिनी भयपरिस्ख- | ,, | १७५ |

| | | पृ० |
|---|---|---|
| उत्सिक्तस्य तप‿पराक्रम- | (दी०) | ६९ |
| उदित्तरकआभोआ | (वृ०) | ४१७ |
| उदितं मण्डलमिन्दोः | (दी०) | १३१ |
| उद्दामोत्कलिकां विपाण्डु- | (वृ०) | ९९ |
| उद्दीपनप्रशमने | (का०) | २०९ |
| उद्भेदभेदकरणा- | (दी०) | २२० |
| उन्नतः प्रोल्लसद्धारः | (वृ०) | ११८ |
| उन्मदोऽसितमणिप्रभलो- | (दी०) | ६८ |
| उपक्षेपः परिकरः | (दी०) | २२० |
| उपमैका शैलूषी | (दी०) | ३८ |
| उप्पहजाआए असोहिणीए | (वृ०) | ३७६ |
| उपोढरागेण विलोलतारकं | ,, | ६४ |
| उल्लङ्घ्य गौरवमुपेक्ष्य | (दी०) | २०३ |

ऋ

| | | |
|---|---|---|
| ऋग्वेदाद् भारतीवृत्ति- | (दी०) | २५६ |
| ऋतुमाल्यालङ्कारैः | (दी०) | २११ |

ए

| | | |
|---|---|---|
| एकन्तो रुअइ पिआ | (वृ०) | २७९ |
| एकम्पादमथैकस्मिन् | (दी०) | २८० |
| एका भगवतो मूर्त्ति- | (दी०) | ४२९ |
| एकाश्रयत्वे निर्दोषो | (का०) | २८५ |
| एतद्यथोक्तमौचित्य- | (का०) | २०५ |
| एतद्धि न तपः सत्य- | (दी०) | ३७ |
| एमेअजणो तिस्सा | (वृ०) | १६२ |
| एवं ध्वनेः प्रभेदाः | (का०) | ३९८ |
| एवंवादिनि देवर्षौ | (वृ०) | १२४ |
| एहि गच्छ पतोत्तिष्ठ | ,, | २६५ |

ऐ

| | | पृ० |
|---|---|---|
| ऐकार्थ्यमुपनीयन्ते | (दी०) | २२१ |

ओ

| | | |
|---|---|---|
| ओङ्कारश्चाथशब्दश्च | (दी०) | ४५५ |

क

| | | |
|---|---|---|
| कण्ठाच्छित्त्वाऽक्षमाला | (वृ०) | २७९ |
| कथायां सरसं वस्तु | (दी०) | २०० |
| कथाशरीरमुत्पाद्य | (वृ०) | २१८ |
| कथांशानां व्यवच्छेद- | (दी०) | २०० |
| कपोले पत्त्राली | (वृ०) | ९३ |
| कमलमनम्भसि, कमले | (दी०) | ३४३ |
| कमलआराॅण मलिआ | (वृ०) | १५४ |
| करमुदयमहीधरस्तनाग्रे | (दी०) | ४३४ |
| करिणीवेहव्वारो महपुत्तो | (वृ०) | ४१८ |
| कर्णकल्पितरसाल- | (दी०) | १९ |
| कर्ता द्यूतच्छलानां | (वृ०) | ३८९ |
| कर्तृवंशप्रशंसा स्यात् | (दी०) | २०० |
| कर्पूर इव दग्धोऽपि | (दी०) | ३८ |
| कस्त्वं भोः कथयामि | (वृ०) | ३७५ |
| कस्सवण होइ रोसो | ,, | १७ |
| काकः कृष्णः पिकः कृष्णः | (दी०) | ६५ |
| काकतीयविभोःकीर्ति- | (दी०) | १३१ |
| कार्यमेकं यथा व्यापि | (का०) | २७५ |
| कालेन चन्द्रिकाया- | (दी०) | ४५६ |
| काव्याध्वनि ध्वनिर्व्यङ्ग्यं | (वृ०) | ३८५ |
| काव्यस्यात्मा स एवार्थः | (का०) | २१ |
| काव्यस्यात्मा ध्वनि- | (का०) | ३ |
| किं हास्येन न मे प्रमास्यसि | (वृ०) | ७२ |

| | | पृ० |
|---|---|---|
| किमपि किमपि मन्दं | (दी०) | ६८ |
| कुरङ्गीवाङ्गानि स्तिमित– | (दी०) | ३५७ |
| कुरवक ! कुचाघातक्रीडा | (दी०) | २७० |
| कुविआओ पसन्नाओ | (वृ०) | ५४ |
| कृतककुपितैर्वाष्पा– | (दी०) | १७८ |
| कृते वरकथाऽऽलापे | (वृ०) | ४१६ |
| केलीकन्दलितस्य | (दी०) | १४९, ३५२ |
| कोपात्कोमललोल– | (वृ०) | १०६ |
| को वा दैवतटिनि | (दी०) | ३५४ |
| कोषः श्लोकसमूहस्तु | (दी०) | २०१ |
| क्रमेण प्रतिभात्यात्मा | (का०) | १०९ |
| क्रामन्त्यः क्षतकोमला– | (वृ०) | २७२ |
| क्रीडत्कलिन्दकन्या | (दी०) | ४५७ |
| क्रोधेनावमृशेयत्र | (दी०) | २२१ |
| क्व सूर्यप्रभवो वंशः | (दी०) | ३५३ |
| क्वाकार्यं शशलक्ष्मणः | (वृ०) | २६२ |
| क्षिप्तो हस्तावलग्नः | ,, | ७३ |
| **ख** | | |
| खं येऽत्युज्ज्वलयन्ति | (वृ०) | १०३ |
| खणपाहुणिआ देवर | ,, | ३८७ |
| खण्डकाव्यं भवेत्काव्य– | (दी०) | १९९ |
| **ग** | | |
| गअणं च मत्तमेहं | (वृ०) | ६६ |
| गणिकासु विधेयो न | (दी०) | १४१ |
| गाढालिङ्गणरहसु– | (दी०) | १३० |
| गुणः कृतात्मसंस्कारः | (दी०) | २७५ |
| गुणानाश्रित्य तिष्ठन्ती | (का०) | १८१ |



| | | पृ० |
|---|---|---|
| गुरुवरमार्कण्डेयप्रचुर | (दी०) | ४५६ |
| गृहेष्वध्वसु वा नान्नं | (दी०) | ४० |
| **च** | | |
| चक्राभिघातप्रसभाज्ञयैव | (वृ०) | ९८ |
| चक्राभिघातप्रसभाज्ञयैव | (दी०) | ३९ |
| चञ्चद्भुजभ्रमितचण्ड– | (वृ०) | ८५ |
| चतुःषष्टिविधं ह्येत– | (दी०) | २१० |
| चन्दनासक्तभुजग– | (वृ०) | १४४ |
| चन्दमऊएहिं णिसा | ,, | १३६ |
| चमहिअमाणसकञ्चण | ,, | ११५ |
| चरणपतनप्रत्याख्याना– | (दी०) | ६९ |
| चलापाङ्गां दृष्टिं स्पृशसि | (वृ०) | ९७ |
| चित्रं शब्दार्थभेदेन | (का०) | ३७७ |
| चुम्बिज्जइ सअहुत्तं | (वृ०) | ५३ |
| चूअङ्कुरावअंसं | ,, | १६८ |
| **ज** | | |
| जन्मान्तरीणरमण– | (दी०) | ७७ |
| जरानेयं मूर्ध्नि ध्रुव- | (दी०) | ४३४ |
| जाएज्ज वणुद्देशे | (वृ०) | १४३ |
| **झ** | | |
| झगिति कनकचित्रे | (वृ०) | १७६ |
| **ढ** | | |
| ढुण्ढुल्लन्तो मरिहिसि | (दी०) | १४९ |
| **ण** | | |
| ण अ ताण घडइ | (वृ०) | ४३८ |
| **त** | | |
| तं ताणसिरिसहो– | (वृ०) | १४० |
| तत्परावेव शब्दार्थौ | (का०) | ४५ |
| तत्त्वस्यान्यस्य सद्भावे | (का०) | ४५१ |

| | | पृ० |
|---|---|---|
| तत्सादृश्यमभावश्च | (दी०) | २५७ |
| तथाभूतां दृष्ट्वा नृपसदसि | (दी०) | ३६० |
| तथाभूते तस्मिन्मुनि— | (दी०) | २२४ |
| तद्गेहं नतभित्ति, | (वृ०) | २४४ |
| तद्वत्सचेतसां सोऽर्थो | (का०) | ३० |
| तद्वक्त्रामृतपान- | (दी०) | ७७ |
| तदुदाहरणं नाम्ना | (दी०) | २०१ |
| तदोडुराजः ककुभः | (दी०) | ४३४ |
| तन्वीमेघजलार्द्रपल्लव- | (वृ०) | ८० |
| तन्वी श्यामा शिखरिदशना | (दी०) | २०३ |
| तमर्थमवलम्बन्ते | (का०) | ८२ |
| तमर्थमवलम्बन्ते | (वृ०) | १८४ |
| तरङ्गभ्रूभङ्गाक्षुभित- | ,, | ७९ |
| तस्मात्तु मिथुनादेकं | (दी०) | २२ |
| तस्याङ्गानां प्रभेदा ये | (का०) | ८८ |
| तस्याङ्गानां प्रभेदा ये | (दी०) | ४१३ |
| तस्या विनाऽपि हारेण | (वृ०) | ११२ |
| तत्र पूर्वमनन्यात्म | ,, | ४५० |
| तत्र वाच्यः प्रसिद्धो यः | (का०) | १२ |
| तत्रापवादसम्फेटौ | (दी०) | २२१ |
| ताराणां सङ्ख्यया पद्यै- | (दी०) | २०१ |
| ताला जाअन्ति गुणा | (वृ०) | ६४ |
| तालैः शिञ्जावलयसुभगैः | ,, | २३४ |
| तेषां गोपवधूविलास- | ,, | ८० |
| त्रासाकुलः परिपतन् | ,, | १४६ |
| त्रिभुवनकमनं तमाल- | (दी०) | २० |
| **द** | | |
| दत्तानन्दाः प्रजानां | (वृ०) | ११८ |
| दन्तक्षतानि करजैश्च | (वृ०) | ३९६ |
| दयितस्य गुणाननुस्मरन्ती | (दी०) | २६१ |
| दिङ्मात्रं तूच्यते येन | (का०) | ८९ |
| दिशाऽनयाऽनुसर्तव्यो | (का०) | ४१२ |
| दीर्घीकुर्वन् पटुमदकलं | (वृ०) | ३९४ |
| दीव्यत्सु दिव्यकाव्येषु | (दी०) | ३९७ |
| दुराराधा राधा सुभग ! | (वृ०) | ३६६ |
| दृष्टपूर्वा अपि ह्यर्थाः | (का०) | ४१४ |
| दृष्टपूर्वा अपि ह्यर्थाः | (दी०) | ४३१ |
| दृष्ट्या केशवगोपराग- | (वृ०) | ११६ |
| देआ पसिअ णिवत्तसु | ,, | १७ |
| देव्वाएत्तम्मि फले | ,, | १४१ |
| देवीस्वीकृतमानसस्य | (दी०) | २२४ |
| दैन्येऽथ लाटानुप्रासे | (दी०) | २४२ |
| द्वीपादन्यस्मादपि | (दी०) | २४३ |
| **ध** | | |
| धृतिः क्षमा दया शौचं | (दी०) | १६० |
| ध्वनिवृत्तिकर्तृवाणीं | (दी०) | १ |
| ध्वनेरित्थं गुणीभूत- | (का०) | ४३५ |
| ध्वनेर्यः सगुणीभूत- | (का०) | ४०५ |
| ध्वनेर्यः सगुणीभूत- | (दी०) | ४३३ |
| ध्वन्यात्मभूते शृङ्गारे | (वृ०) | ९१ । ९६ |
| **न** | | |
| न चेह जीवितः कश्चिद् | (दी०) | २२७ |
| न यत्र दुःखं न सुखं | (दी०) | २२८ |
| नयनानन्ददायीन्दो- | (दी०) | ४१ |
| नर्मद्युतिः प्रगमनं | (दी०) | २२० |

| | पृ० |
|---|---|
| न सोऽस्ति प्रत्ययो लोके (दी०) | ६४ |
| नाटकमथ प्रकरणं (दी०) | १९९ |
| नाटिका.त्रोटकं गोष्ठी (दी०) | २०० |
| नान्ध्रीपयोधर इवाति- (दी०) | ५२ |
| नितरां परुषां सरोज- (दी०) | ४२ |
| नित्याक्लिष्टरसाश्रयो- (वृ०) | ४५५ |
| निद्राकैतविनः प्रियस्य ,, | ४१० |
| निन्दन्त्वत्र कुलस्त्रियः (दी०) | ६९ |
| निर्वाणभूयिष्ठमथास्य (वृ०) | १२५ |
| निर्व्यूढावपि चाङ्गत्वे (का०) | ९७ |
| निषेधो वक्तुमिष्टस्य (दी०) | ३५ |
| नीरक्षीरनयाद्यत्र (दी०) | ४० |
| नीरसस्तु प्रबन्धो यः (वृ०) | २५७ |
| नीवाराः शुकगर्भकोटर- ,, | २३९ |
| नोकल्पापायवायो- ,, | १०३ |
| न्यक्कारो ह्ययमेव मे ,, | २२९ |
| **प** | |
| पत्युश्शिरश्चन्द्रकलामनेन (वृ०) | ३६४ |
| पदानां स्मारकत्वेऽपि ,, | १७२ |
| पन्थिअ ण एत्थ (दी०) | ११० |
| परार्थे यःपीडामनुभवति (वृ०) | ५८,३७४ |
| परिपन्थिरसाङ्गस्य (दी०) | २१० |
| परिम्लानं पीनस्तन- (वृ०) | ५३ |
| पश्येत्कश्चिच्चलचपल (दी०) | ७८ |
| पाण्डुक्षामं वदनं हृदयं (दी०) | २५९,२६४ |
| पादाहतं यदुत्थाय (दी०) | ४२ |
| पुरः सुरीणां भणकेवमानवी(दी०) | २४९ |
| पूर्वे विशृङ्खलगिरः (वृ०) | २५७ |
| प्रकारोऽन्यो गुणीभूत- (का०) | ३४४ |
| प्रकारोऽयं गुणीभूत- (का०) | ३६६ |
| प्रकृतस्य निषेधेन (दी०) | ३७ |
| प्रकृतार्थेन वाक्येन (दी०) | ३४ |
| प्रकृष्यमाणो यो भावो- (दी०) | २४ |
| प्रत्ययैरनुपाख्येयै- (दी०) | ४७ |
| प्रतायन्तां वाचो- (वृ०) | ४५३ |
| प्रतिस्कन्धं भिन्नवाक्य- (दी०) | २०१ |
| प्रतीयमानं पुनरन्यदेव (का०) | ८१३ |
| प्रथमश्रवणाच्छन्दः (दी०) | २६ |
| प्रधानगुणभावाभ्यां (का०) | ३७७ |
| प्रधानगुणभावाभ्यां (दी०) | ३२ |
| प्रधानत्वं विधेर्यत्र (दी०) | ५८ |
| प्रधानेऽन्यत्र वाक्यार्थे (का०) | ७१ |
| प्रबन्धे मुक्तके वाऽपि (का०) | २५० |
| प्रभेदस्यास्य विषयो- (का०) | ३६३ |
| प्रभ्रश्यत्युत्तरीयत्विषि (वृ०) | २४० |
| प्रयच्छतोच्चैः कुसुमानि ,, | ३६४ |
| प्ररोचना विचलन- (दी०) | २२१ |
| प्रवातनीलोत्पल- (दी०) | ४० |
| प्रसन्नगम्भीरपदाः (का०) | ३४८ |
| प्रसादानन्दसमयाः (दी०) | २२१ |
| प्रसादे वर्तस्व प्रकटय (दी०) | २५२ |
| प्रसिद्धेऽपि प्रबन्धानां (का०) | २७३ |
| प्रातुं धनैरर्थिजनस्य (वृ०) | १६६ |
| प्राप्तश्रीरेष कस्मात ,, | १३७ |

| | | पृ० |
|---|---|---|
| प्रारम्भेऽस्मिन्स्वामिनो- | (दी०) | २२१ |
| प्रासङ्गिकं प्रदेशस्थं | (दी०) | २७६ |
| प्रेङ्खत्प्रेमप्रबन्ध- | (दी०) | १५८ |
| प्रौढोक्तिमात्र निष्पन्न- | (का०) | १२९ |

**ब**

| | | |
|---|---|---|
| बहूनां जन्मनामन्ते | (दी०) | ४२८ |
| बहूनां समवेतानां | (दी०) | २८३ |
| बिन्दुप्रयत्नानुगमा- | (दी०) | २२० |
| बीजं बिन्दुः पताका च | (दी०) | २७५ |
| बीज-बिन्दु-पताकाऽऽख्य- | (दी०) | २२० |
| बोद्धृस्वरूपसङ्ख्या- | (दी०) | १८ |
| ब्राह्मणातिक्रमत्यागो | (दी०) | ३६३ |

**भ**

| | | |
|---|---|---|
| भक्ताभिलषितपूर्त्ति- | (दी०) | ४०५ |
| भगवान् वासुदेवश्च | (दी०) | ४२६ |
| भम धम्मिय वीसत्थो | (वृ०) | १४ |
| भयानको सुखपरो | (दी०) | २०१ |
| भवन्ति यत्र दीप्ताश्च | (दी०) | २०० |
| भारतं परमं पुण्यं | (दी०) | ४२५ |
| भारतं सर्वशास्त्राणा- | (दी०) | ४२५ |
| भावानचेतनानपि | (वृ०) | ३८२ |
| भूरेणुदिग्धान्नवपारिजात- | ,, | २८९ |
| भ्रमिमरतिमलसहृदयतां | ,, | ११४, २६३ |

**म**

| | | |
|---|---|---|
| मथ्नामि कौरवशतं | (दी०) | ३५९ |
| मदमुखरकपोतमुन्मयूरं | (वृ०) | २३९ |
| मधुद्विरेफः कुसुमैकपात्रे | (दी०) | ६८ |
| मध्ये व्योम स्फुरति | (दी०) | २२५ |
| मनुष्यवृत्त्या समुपाचरन्तं | (वृ०) | २४० |
| मरकतमणिमेदिनी- | (दी०) | १३५ |
| मल्लिकामुकुले चण्डि | (दी०) | १३१ |
| महमह इन्ति भणिन्तउ | (वृ०) | ४४६ |
| महासत्त्वोऽतिगम्भीरः | (दी०) | २१४ |
| महिलासहस्सभरिए | (दी०) | १३१ |
| माधुर्य्यव्यञ्जकैर्वर्णै- | (दी०) | १८१ |
| मा निषाद प्रतिष्ठां त्व- | (वृ०) | २३ |
| मा पन्थं रुन्धीयो | ,, | २३५ |
| मायापरः प्रचण्डश्च- | (दी०) | १९५ |
| मिथिलामहेन्द्रहृद्यात् | (दी०) | ४५६ |
| मीनवतीनयनाभ्यां | (दी०) | १९ |
| मुक्तकं श्लोक एवैक- | (दी०) | १९९ |
| मुखं बीजसमुत्पत्ति- | (दी०) | २२० |
| मुख्यस्यार्थावताराय | (दी०) | २०० |
| मुख्यां वृत्तिं परित्यज्य | (का०) | ५६ |
| मुख्या महाकविगिरा- | (का०) | ३५७ |
| मुख्यार्थबाधे तद्योगे | (दी०) | ५७ |
| मुख्या व्यापारविषया- | (वृ०) | २५७ |
| मुनिर्जयति योगीन्द्रो- | ,, | ४३१ |
| मुहुरङ्गुलिसंवृताधरोष्ठं | ,, | २३८ |

**य**

| | | |
|---|---|---|
| यः कालागुरुपत्त्र- | (दी०) | १४९ |
| यः प्रथमः प्रथमः स तु | (वृ०) | ४०९ |
| यः सम्योगवियोगाभ्यां | (दी०) | ४७ |
| यच्च कामसुखं लोके | (वृ०) | २८६ |

| | | पृ० |
|---|---|---|
| यत्कटाक्षो दयासान्द्रो- | (दी०) | ४०५ |
| यत्करुणाकणिकैव | (दी०) | ४५७ |
| यत्र प्रतीयमानोऽर्थः | (का०) | १५३ |
| यत्रार्थः शब्दो वा | (का०) | ३१ |
| यत्सामग्र्येऽपि हेतूनां | (दी०) | ३८ |
| यत्सार्वभौमविद्या·· | (दी०) | ४५७ |
| यत्स्यादनुचितं वस्तु | (दी०) | २१० |
| यथा पदार्थद्वारेण वाक्यार्थः | (का०) | २८ |
| यथा पदार्थद्वारेण | (दी०) | ३१२ |
| यथा यथा विपर्य्येति- | (वृ०) | ४२३ |
| यदपि तदपि रम्यं | (का०) | ४५३ |
| यदि लेशतोऽपि कांश्चि- | (दी०) | ४५७ |
| यद्यद्विभूतिमत्सत्त्वं | (दी०) | ४२७ |
| यद्वञ्चनाहितमतिर्वहु- | (वृ०) | २४२ |
| यद्वाम्याभिनिवेशित्वं | (दी०) | २२२ |
| यन्नाहतस्त्वमलिना | (दी०) | ४४ |
| यस्त्वलक्ष्यक्रमव्यङ्ग्यो- | (का०) | १७३ |
| यस्माल्लोकत्रयं चैतद् | (दी०) | २३० |
| यस्मिन्नस्ति न वस्तु | (वृ०) | ८ |
| यस्मिन् रसो वा भावो वा | ,, | ३८५ |
| यस्य प्रतीतिमाधातुं | (दी०) | ५९ |
| यस्येयं वसुधा कृत्स्ना | (दी०) | ४२९ |
| या चित्रयुद्धभ्रमशस्त्रपात- | (दी०) | २५६ |
| या निशा सर्वभूतानां | (वृ०) | १६३ |
| या भवन्तमनलः पवनो- | (दी०) | १५९ |
| या वाक्प्रधाना पुरुषप्रयोज्या | (दी०) | २५६ |
| या व्यापारवती रसान् | (वृ०) | ३९२ |
| या श्लक्ष्णनेपथ्यविधान- | (दी०) | २५६ |
| या सत्त्वजेनेह गुणेन युक्ता | (दी०) | २५६ |
| युक्तवियुक्तदशाया | (दी०) | २८७ |
| यूनोरेकतरस्मिन् | (दी०) | ८९ |
| ये जीवन्ति न मान्ति ये | (वृ०) | २४१ |
| येन केनापि तालेन | (दी०) | २०१ |
| येन ध्वस्तमनोभवेन | (वृ०) | १११ |
| ये रसस्याङ्गिनो धर्मा- | (दी०) | ८७ |
| यो यः शस्त्रं बिभर्त्ति | (वृ०) | ८६ |
| योऽर्थः सहृदयश्लाघ्यः | (का०) | १२ |
| **र** | | |
| रक्तस्त्वं नवपल्लवै- | (वृ०) | १०० |
| रतिर्देवादिविषया | (दी०) | २०९ |
| रत्नानां सङ्ख्यया पद्यै- | (दी०) | २०१ |
| रम्या इति प्राप्तवतीः | (वृ०) | १४७ |
| रविसंक्रान्तलक्ष्मीक- | ,, | ६५ |
| रसवन्धोक्तमौचित्यं | (का०) | २०६ |
| रसभावादिविषय- | (वृ०) | ३८१ |
| रसभावादिसम्बद्धा | (का०) | ४४७ |
| रसभावादितात्पर्य- | (का०) | ७५ |
| रसभासतदाभास- | (का०) | ६७ |
| रसवन्ति हि वस्तूनि | (वृ०) | ९५ |
| रसविच्छेदहेतुत्वान्- | (दी०) | २६० |
| रसव्यक्तिमपेक्ष्यैषा | (दी०) | २१० |
| रसाक्षिप्ततया यस्य | (का०) | ९२ |
| रसादिषु विवक्षा तु | (वृ०) | ३८१ |
| रसाद्यनुगुणत्वेन | (का०) | २९५ |

| | | पृ० |
|---|---|---|
| रसानुगुणतां वीक्ष्य | (दी०) | २१० |
| रसान्तरान्तरितयो- | (का०) | २८८ |
| रसान्तरसमावेशः | (का०) | २७४ |
| रसाभावाङ्गभावस्तु | (वृ०) | ९६ |
| राजानमपि सेवन्ते | ,, | ३६९ |
| रूढा ये विषयेऽन्यत्र | ,, | ५६ |
| रूपकादिरलङ्कार- | (का०) | १३४ |
| रोलम्बाः परिपूरयन्तु | (दी०) | २६१ |
| रौद्रादयो रसा दीप्त्या | (का०) | ८४ |
| **ल** | | |
| लाक्षागृहानलविषान्न- | (दी०) | ३५९ |
| लच्छी दुहिदा जामाउओ | (वृ०) | ३४८ |
| लावण्यकान्तिपरि- | ,, | १३८ |
| लावण्यद्रविणव्ययो- | ,, | ३७० |
| लावण्यसिन्धुपरैव हि | ,, | ३४५ |
| लिखन्नास्ते भूमिं बहि- | (दी०) | २०२ |
| लीलादाढा ग्गुध्यूढा | (दी०) | २२६ |
| लीलाविलासो विच्छित्ति- | (दी०) | ११४ |
| लोकयात्राविधानं च | (दी०) | ४२४ |
| **व** | | |
| वक्त्रं वाऽपरवक्त्रं वा | (दी०) | २०० |
| वच्च महव्विअ | (वृ०) | १६ |
| वत्से मा गा विषादं | ,, | १२८ |
| वर्ण्यमानाङ्कविरुद- | (दी०) | २०१ |
| वसन्तमत्तालिपरम्परो- | (दी०) | ४३४ |
| वाक्यार्थमितये तेषां | (दी०) | ३०७ |
| वाग्धेनुर्दुग्ध एकं | (दी०) | २४ |

| | | पृ० |
|---|---|---|
| वाचकत्वाश्रयेणैव | (का०) | ५७ |
| वाचस्पतिसहस्राणां | (का०) | ४४८ |
| वाच्यवाचकचारुत्व- | (का०) | ७० |
| वाच्यस्तदनुमितो वा | (दी०) | ३१,३३६ |
| वाच्यानां वाचकानां च | (का०) | २९४ |
| वाच्यालङ्कारवर्गोऽयं | (का०) | ३४९ |
| वाणिअअ हत्तिदन्ता | (वृ०) | १६९ |
| वाणीरकुडङ्गोड्डीण- | ,, | १५५ |
| वाल्मीकिव्यतिरिक्तस्य | ,, | ४४५ |
| वाल्मीकिव्यासमुख्याश्च | ,, | २५८ |
| वासनात्सर्वभूतानां | (दी०) | ४२९ |
| वासुदेवपरं ज्ञानं | (दी०) | ४२८ |
| वासुदेव परा वेदा- | (दी०) | ४२८ |
| वासुस्सर्वनिवासश्च | (दी०) | ४२९ |
| विच्छित्तिशोभिनैकेन | (वृ०) | १७२ |
| विज्ञायेत्थं रसादीना- | (का०) | २९४ |
| विनेयानुन्मुखीकर्तुं- | (वृ०) | २९२ |
| विभावभावानुभाव- | (का०) | २०८ |
| विभाव्यते हि रत्यादि- | (दी०) | २०९ |
| विमतिविषयो य आसी- | (का०) | ३४० |
| विमानपर्यङ्कतले निषण्णाः | (वृ०) | २८९ |
| विरुद्धैकाश्रयो यस्तु | (का०) | २८४ |
| विरोधमविरोधञ्च | (का०) | २९० |
| विरोधिरससम्बन्धि- | (का०) | २५१ |
| विवक्षा तत्परत्वेन | (का०) | ९६ |
| विवक्षिते रसे लब्ध- | (का०) | २५८ |
| विशेषादाभिमुख्येन | (दी०) | २०९ |

| | | पृ० |
|---|---|---|
| विभ्रमकाण्डकुटुम्बक- | (दी०) | १५८ |
| विषयाश्रयमप्यन्य- | (का०) | १९८ |
| विसमअओ च्चिअ | (वृ०) | १६४ |
| विस्रम्भोत्था मन्मथाज्ञा- | ,, | ३५८ |
| वीराणं रमइ घुसिण- | ,, | १३९ |
| वेदयोगं सविज्ञानं | (दी०) | ४२४ |
| व्यङ्ग्यव्यञ्जकभावेऽस्मिन् | (वृ०) | ४२० |
| व्यङ्ग्यव्यञ्जकसम्बन्ध- | (वृ०) | ३३ |
| व्यङ्ग्यस्य यत्राप्राधान्यं | (का०) | ४५ |
| व्यज्यन्ते वस्तुमात्रेण | (का०) | १५१ |
| व्रीडायोगान्नतवदनया | (वृ०) | १७७ |
| **श** | | |
| शब्दतत्त्वाश्रयाः काश्चि- | (का०) | ४०० |
| शब्दप्राधान्यमाश्रित्य | (दी०) | २३ |
| शब्दबोध्यो व्यन- | (दी०) | ३१,२४६,३१७ |
| शब्दस्योर्ध्वमभिव्यक्ते- | (दी०) | ४७ |
| शब्दार्थशक्त्या वाऽऽक्षिप्तो | (का०) | १२७ |
| शब्दार्थशासनज्ञान- | (का०) | २५ |
| शरीरीकरणं येषां | (का०) | १५० |
| शषाभ्यां रेफसंयोगै- | (दी०) | २५७ |
| शषौ सरेफसंयोगौ- | (का०) | १७४ |
| शाश्वतं ब्रह्म परमं | (दी०) | ४२६ |
| शिखिरिणि क नु नाम | (वृ०) | ५० |
| शीतांशोरमृतच्छटा- | (दी०) | १०८ |
| शून्यं वासगृहं विलोक्य | | ४१० |
| शृङ्गार एव मधुरः | (का०) | ८३ |
| शृङ्गार एव मधुरः | (दी०) | १८९ |

| | | पृ० |
|---|---|---|
| शृङ्गारस्याङ्गिनो यत्ना- | (का०) | ९० |
| शृङ्गारी चेत्कविः काव्ये | (वृ०) | ३८२ |
| शृङ्गारे विप्रलम्भाख्ये | (का०) | ८४ |
| शेषैर्वर्णैर्यथायोगं | (दी०) | २०४ |
| श्यामास्वङ्गं चकितहरिणी- | (वृ०) | १०६ |
| श्रीपरिचयाज्जडा अपि | (दी०) | ३६२ |
| श्रुतिदुष्टादयो दोषा. | (का०) | ८७ |
| श्रुत्यनन्तरभावो यः | (दी०) | २६ |
| श्लाघ्याशेषतनुं सुदर्शन- | (वृ०) | ११३ |
| **स** | | |
| संलापकं श्रीगदितं | (दी०) | २०० |
| संवादास्तु भवन्त्येव | (का०) | ४४९ |
| संवादो ह्यन्यसादृश्यं | (का०) | ४४९ |
| संस्कृतं नाम दैवी वा- | (दी०) | १९९ |
| स एकस्त्रीणि जयति | (दी०) | ३८ |
| स एवेदं ससर्जाग्रे | (दी०) | ४२८ |
| सकृद्वृत्तिस्तु धर्मस्य | (दी०) | ७३ |
| सङ्केतकालमनसं | (वृ०) | १२६ |
| सगुणीभूतव्यङ्ग्यैः | (का०) | ३८५ |
| सज्जेहि सुरहिमासो | (वृ०) | १३१ |
| सञ्जहार शरत्कालः | (दी०) | ३७ |
| सत्काव्यतत्त्वविषयं | (वृ०) | ४५६ |
| सत्यं मनोरमा रामाः | ,, | २९३ |
| सत्यं मनोरमा रामाः | (दी०) | १६९ |
| सन्ति सिद्धरसप्रख्या- | (वृ०) | २१८ |
| सन्धिसन्ध्यङ्गघटनं | (का०) | २०९ |
| सत्यर्थे पृथगर्थाया- | (दी०) | ९१ |

| | | पृ० |
|---|---|---|
| स पातु वो यस्य हता- | (दी०) | ७७ |
| समर्पकत्वं काव्यस्य | (का०) | ८६ |
| समर्पकत्वं काव्यस्य | (दी०) | १९६ |
| समविसमणिव्विसेसा | (वृ०) | २४३ |
| समस्तगुणसंपदः | (दी०) | ७७ |
| समस्तात्युद्भटपदाम्भोजः | (दी०) | १८१ |
| समाप्यते तयोर्नाद्या | (दी०) | २०० |
| समुत्थिते धनुर्ध्वनौ | (दी०) | २८४ |
| सम्योगो विप्रयोगश्च | (दी०) | ११० |
| सरसो विपरीतश्चेत् | (दी०) | २० |
| सरस्वती स्वादु तदर्थवस्तु | (का०) | २४ |
| सरूपसयोगयुतां | (दी०) | २५६ |
| सर्वत्र ज्वलितेषु | (दी०) | २२४ |
| सर्वेऽपि विस्मृतिपथं | (दी०) | ६९ |
| सर्वेष्वेव प्रभेदेषु | (का०) | १५८ |
| सर्वैकशरणमक्षय- | (वृ०) | १२२ |
| स वक्तुमखिलाञ्छक्तो- | ,, | १४० |
| सविभ्रमस्मितोद्भेदा | ,, | ४०८ |
| सशोणितैः क्रव्यभुजां | ,, | १८८ |
| साअरविइण्णजोव्वण- | ,, | १३२,४१७ |
| सार्कं कुरङ्गकदृशा | (दी०) | ७७ |
| सा कथा नाम तद्गर्भे | (दी०) | २०० |
| सिज्जइ रोमञ्चिज्जइ | (वृ०) | ४३३ |
| सिहिपिच्छकण्णऊरा | ,, | १३३ |
| सिहिपिञ्छकण्णऊरा | ,, | १७० |

| | | पृ० |
|---|---|---|
| सुतनु जहिहि कोपं | (दी०) | ६९ |
| सुप्-तिङ्-वचन-सम्बन्धै- | (का०) | २२८ |
| सुरभिसमये प्रवृत्ते | (वृ०) | ४१७ |
| सुराः समभ्यर्थयितार एते | (दी०) | २४१ |
| सुवर्णपुष्पं पृथिवीं | (वृ०) | ४९ |
| सैषा सर्वत्र वक्रोक्ति- | (दी०) | १३५ |
| सैषा सर्वत्र वक्रोक्ति- | (वृ०) | ३५१ |
| सोऽपूर्वो रसनाविपर्यय- | (दी०) | ३७७ |
| सोऽर्थस्तद्व्यक्तिसामर्थ्य- | (का०) | २७ |
| स्त्रियो नरपतिर्वह्नि- | (दी०) | २०७ |
| स्निग्धश्यामलकान्ति- | (वृ०) | ६२ |
| स्मरनवनदीपूरेणोढाः | (दी०) | १७९ |
| स्मरशरविधुराया | (दी०) | ३६ |
| स्मितं किञ्चिन्मुग्धं | (वृ०) | ४०७ |
| स्वं स्वं निमित्तमासाद्य | (दी०) | २८८ |
| स्वतेजः क्रीतमहिमा | (वृ०) | ४०९ |
| स्वसामर्थ्यवशेनैव | (का०) | २९ |
| स्वादुकाव्यरसोन्मिश्रं | (दी०) | २९२ |
| स्वेच्छाकेसरिणः | (वृ०) | १ |

ह

| | | |
|---|---|---|
| हंसानां निनदेषु यैः | (वृ०) | ४४० |
| हरस्तु किञ्चित्परिलुप्त- | (दी०) | ३६३ |
| हिअअट्ठाविअमण्णुं | (वृ०) | १४२ |
| होइ ण गुणाणुराओ | (दी०) | ४१ |


इति सदीधितिध्वन्यालोकस्य श्लोकानुक्रमणिका ।

# परीक्षोपयोगि-पाठ्यग्रन्थानां संक्षिप्तसूचीपत्रम् ।

१ मेघदूतम् । संजीविनी—चारित्रवर्द्धिनी-भावप्रबोधिनी-व्याख्यात्रयोपेतं । सटिप्पणम् ।

२ कुमारसम्भवम् । सञ्जीविनी-चारित्रवर्द्धिनी-शिशुहितैषिणीव्याख्यात्रयोपेतम् । १-४

३ वृत्तरत्नाकरः । नारायणभट्टीव्याख्या-श्रुतबोधच्छन्दोमञ्जरी-सुवृत्ततिलक-विषमस्थलटिप्पणोपेतः । १-८

४ छन्दोमञ्जरी । सटीका । ०-१२

५ साहित्यदर्पणः । परीक्षोपयोगिटीकासहितः । ४-०

६ शिशुपालवधम् । वल्लभदेवकृतया सन्देहविषौषधिव्याख्यया-मल्लिनाथकृतया सर्वङ्कषाव्याख्यया चोपेतम् । उत्तम संस्करण ३-०
विद्यार्थी संस्करण २-४

७ कादम्बरी-पूर्वार्द्धम् । परीक्षोपयोगिटीकासहितम् । ५-०

८ „ सम्पूर्ण । सटीक । ६-०

९ नैषधीयचरितम् । मल्लिनाथकृतटीकासहितम् १-१० सर्गाः ३-८

१० „ नारायणीटीकासहितम् । ६-०

११ मुद्राराक्षसनाटकम् । भावबोधिन्याख्यया संस्कृतव्याख्यया आशुबोधिन्याख्यया हिन्दीव्याख्यया चोपेतम् । २-०

१२ अभिज्ञानशाकुन्तलम् । किशोरकेली नाम्नी संस्कृतव्याख्या-[illegible]टीकासहितम् । [illegible] संस्करण २-०
विद्यार्थी संस्करण १-१२

१३ प्राकृतप्रकाशः । परीक्षोपयोगिबृहट्टिप्पणीसहितः । १-४

१४ रामायणचम्पूः [illegible] । २-०

१५ वेणीसंहारः । सटीकः । १-४

१६ काव्यप्रकाशः परीक्षोपयोगिनागेश्वरटीकासहितः । ४-०

१७ „ [illegible] नागरीव्याख्यासहितः । ५-०

१८ रसमञ्जरी । [illegible] कौमुदी तथा प्रकाशव्याख्याद्वयोपेता ३-०

१९ „ [illegible] सुरभिटीकोपेता १-४

प्राप्तिस्थानम्—चौखम्बा-संस्कृत-पुस्तकालय, बनारस सिटी ।